## बृहज्जोतिषार्णवे धर्मस्कन्ध उपासनास्तबके

# श्रीबटुकभैरवोपासनाऽध्यायः १२४


मुद्रक एवं प्रकाशकः

**खेमराज श्रीकृष्णदास,**

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, बम्बई-४०० ००४

बृहज्जोतिषार्णवे धर्मस्कन्ध उपासनास्तवके

# श्रीबटुकभैरवोपासनाऽध्यायः १२४

मुद्रक एवं प्रकाशकः

खेमराज श्रीकृष्णदास,

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, बम्बई-४०० ००४

# अथ बटुकभैरवोपासनाध्यायविषयानुक्रमणिका ।



इति विषयानुक्रमणिका समाप्ता ।


श्री वटुक भैरव सात्विक स्वरूपम


श्रीबटुक भैरव राजस स्वरूपम.


श्री वटुक भैरव तामस स्वरूपम.

श्रीगणेशाय नमः ॥ वृषवाहनविघ्नेशौ हंसवाहां सरस्वतीम् ॥ स्वेष्टं श्रीबटुकं नत्वा पितरं व्यंकटं ततः ॥
॥ १ ॥ श्रीगौतमकुलोत्पन्नो ज्योतिर्विद्व्यंकटात्मजः ॥ हरिकृष्णः करोत्यत्र बटुकोपासनस्य च ॥ २ ॥
संग्रहमिति शेषः ॥ एतदुपासनायां वै साधारणमपेक्षितम् ॥ तत्सर्वं पूर्वमेवोक्तं विज्ञेयमिदमादरात् ॥ ३ ॥
पूर्वोक्तानां पदार्थानामत्र वक्ष्याम्यनुक्रमम् ॥ लक्षणं गुरुशिष्याणां दीक्षाग्रहणनिर्णयः ॥ ४ ॥ पारायणविधानं
चाभिषेकस्य विधानकम् ॥ बीजानां लक्षणं चैव पुरश्चर्याविधिस्तथा ॥ ५ ॥ स्थानस्य निर्णयश्चैवासनस्य
च विनिर्णयः ॥ लक्षणं चैव मुद्राणां मालानिर्णय एव च ॥ ६ ॥ जपस्य लक्षणं चैव ह्यजपाजपलक्षणम् ॥
तांत्रिकं स्नानसंध्यादिनित्यकर्मनिरूपणम् ॥ ७ ॥ भूशुद्धिद्वारपूजादिदेहरक्षानिरूपणम् ॥ भूतशुद्धिश्च प्राणानां
प्रतिष्ठाविधिरेव च ॥ ८ ॥ न्यासानां निर्णयश्चैव मातृकान्यासनिर्णयः ॥ अनेकविधन्यासानां सप्रमाणं
निरूपणम् ॥ ९ ॥ अर्चनं द्विविधं चैव वामदक्षिणभेदतः ॥ वामेन वा दक्षिणेन पूजनं तु यथारुचि ॥ १० ॥
पात्राणां लक्षणं चैव पात्रस्थापननिर्णयः ॥ शुद्धिः पंचमकाराणां या वामे परिकीर्तिता ॥ ११ ॥ पात्राणां
ग्रहणं चैव तिरस्करणिपूजनम् ॥ अंतर्यागविधानं च वैश्वदेवनिरूपणम् ॥ १२ ॥ बहिर्यागविधानं च देवता
पीठनिर्णयः ॥ सर्वयंत्रप्रतिष्ठा च सापि भेदद्वयात्मिका ॥ १३ ॥ इष्टदेवस्थापनार्थं प्रथमं यन्त्रपूजनम् ॥ वश्या
द्यनेककार्येषु यानि यंत्राणि संति हि ॥ १४ ॥ तेषां चैव प्रतिष्ठा च यंत्रं सिद्धिकरं यतः ॥ अनेकविधपूजाया
भेदलक्षणवर्णनम् ॥ १५ ॥ शंखघंटापूजनं च तन्माहात्म्यनिरूपणम् ॥ उपासनाप्रभेदेन भस्मरुद्राक्षधारणम् ॥
॥ १६ ॥ गोपीचन्दनमाहात्म्यं तुलसीकाष्ठधारणम् ॥ निर्णयश्चैव संप्रोक्त आवाहनविसर्जने ॥ १७ ॥ आस
नस्य च ध्यानस्य तथार्घ्यपाद्यनिर्णयः ॥ विधिराचमनीयस्य मधुपर्कस्य निर्णयः ॥ १८ ॥ विधिः स्नाना
भिषेकस्य जलाहरणनिर्णयः ॥ वस्त्रस्य चोपवीतस्य तथालंकरणस्य च ॥ १९ ॥ गंधाक्षतानां पुष्पाणां पत्राणां
च विनिर्णयः ॥ धूपदीपविधानं च नैवेद्यस्य विनिर्णयः ॥ २० ॥ फलतांबूलयोश्चैव दक्षिणायाश्च निर्णयः ॥
आरार्तिकमंत्रपुष्पप्रदक्षिणविनिर्णयः ॥ २१ ॥ प्रणामस्य प्रार्थनायास्तीर्थस्य च विनिर्णयः ॥ अंगपूजाऽऽवरण
पूजाबलिदानादिनिर्णयः ॥ २२ ॥ कुमारिकादिपूजायाः शक्तिपूजननिर्णयः ॥ स्तोत्रादिपठनं चैव तीर्थग्रहण
निर्णयः ॥ २३ ॥ होमस्य च विधानं वै कुण्डमण्डपलक्षणम् ॥ तर्पणस्य मार्जनस्य द्विजसंतर्पणस्य च ॥ २४ ॥
विधानं च पृथक् प्रोक्तं निर्णयश्च पृथक्पृथक् ॥ मंत्रस्य शीघ्रसिद्ध्यर्थे विधिरुक्तो मया नृणाम् ॥२५॥ सर्वसिद्धिकरः 
साक्षान्मंत्रसंस्कारपूर्वकः ॥ मूलिकाग्रहणे मंत्रा दिशां नियम एव च ॥ २६ ॥ ऋतुमासर्क्षवाराणां तिथीनां
नियमस्तथा ॥ अंगुलीनिर्णयश्चैव वंदाग्रहणनिर्णयः ॥ २७ ॥ सिद्धार्यादिचक्रमार्गशोधनं साधकेष्टयोः ॥
शापोद्धासे कीलने च सूतकादिविनिर्णयः ॥ २८ ॥ नपुंसकादिभेदाश्च मंत्राणां ये प्रकीर्तिताः ॥ पुरश्चरणतः

पूर्वकृत्यं यच्चांतिमे तथा ॥ २९ ॥ तत्सर्वमपि ग्रंथेऽस्मिन्पूर्वमेव प्रकीर्तितम् ॥ पृथक्पृथक् तथाध्यायैः सर्वेषां निर्णयः स्फुटः ॥ ३० ॥ परिभाषाभिधेऽध्याये केषांचिन्निर्णयस्तथा ॥ कृतस्तदनुरोधेन प्रयोगः सिद्धिदो नृणाम् ॥ ३१ ॥ अदृष्ट्वैव विधानं तु कृतश्चेन्नैव सेत्स्यति ॥ एषां सर्वोपासनेषु ह्युपयोगो भवेत्किल ॥ ३२ ॥ तेषां सर्वपदार्थानां पूर्वमेव निरूपणम् ॥ कृतं तस्माद्विशेषेण दृष्ट्वोपासनमारभेत् ॥ ३३ ॥ सर्वे शाक्ता द्विजाः प्रोक्ता न शैवा न च वैष्णवाः ॥ आदिदेवीमुपासंते गायत्रीं वेदमातरम् ॥ ३४ ॥ तस्मादादौ प्रयत्नेन गायत्रीं प्रयुतं जपेत् ॥ पटलं पद्धतिर्वर्म तथा नामसहस्रकम् ॥ ३५ ॥ स्तोत्राणि चेति पंचागं देवतोपासने स्मृतम् ॥ बुधैरितिशेषः ॥ इति पंचांगानि ॥ अथैषां व्यवस्था ॥ कवचं देवतागात्रं पटलं देवताशिरः ॥ ३६ ॥ पद्धतिर्देव हस्तौ तु मुखं साहस्रकं स्मृतम् ॥ स्तोत्राणि देवतापादौ पंचाङ्गं पंचभिः स्मृतम् ॥ ३७ ॥ जपो होमस्तर्पणं च मार्जनं विप्रभोजनम् ॥ आराधनं पंचविधं देवतानां प्रकीर्तितम् ॥ ३८ ॥ पंचांगैः सहितं त्वेतद्दशांगं कथ्यते बुधैः ॥ हृदयं दीपदानं च स्तवराजादिकं तथा ॥ ३९ ॥ मालामंत्रस्तथा कल्पः सर्वमेतद्ब्रवीम्यहम् ॥ उपासना शरांगेषु या प्रोक्ता पद्धतिः पुरा ॥ ४० ॥ इष्टदेवार्चनार्थं वै द्वितीयांगं च तत्स्मृतम् ॥ तस्योपयोगिकं ह्येतत्सर्वं पूर्वं मयोदितम् ॥ ४१ ॥ सविस्तरं च तद्दृष्ट्वा कार्या पद्धतिरुत्तमा ॥ सनिर्णयां च सर्वत्र लिखामि यदि पद्धतिम् ॥ ४२ ॥ तदा ग्रंथो महानेव भवेत्तस्माच्च पूर्वतः ॥ लिखित्वा निर्णयं पश्चात्कवचादिकमत्र वै ॥ ॥ ४३ ॥ प्रवक्ष्यामि विशेषेण ग्रंथानालोक्य यत्नतः ॥ तस्माद्यत्नपरो भूयात्स्वस्य सिद्ध्यै न संशयः ॥ ४४ ॥ इति श्रीहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवे धर्मस्कंधे उपासनास्तबके श्रीबटुकभैरवोपासनाध्याये उपोद्घातप्रकरणं प्रथमम् ॥ अथ श्रीबटुकभैरवकवचम् ॥ उक्तं च भैरवतंत्रे ॥ महादेव उवाच ॥ प्रीयतां भैरवो देवो नमो वै भैरवाय च ॥ देवेशि देहरक्षार्थं कारणं कथ्यतां ध्रुवम् ॥ १ ॥ म्रियंते साधका येन विना श्मशानभूमिषु ॥ रणेषु चातिघोरेषु महामृत्युभयेषु च ॥ २ ॥ शृंगीसलिलवज्रेषु ज्वरादिव्याधिवह्निषु ॥ देव्युवाच ॥ कथयामि शृणु प्राज्ञ बटुककवचं शुभम् ॥ ३ ॥ गोपनीयं प्रयत्नेन मातृकाजारजो यथा ॥ ॐ अस्य श्रीबटुकभैरवकवचस्य आनंदभैरव ऋषिस्त्रिष्टुपछंदः श्रीबटुकभैरवो देवता बं बीजं ह्रीं शक्तिः ॐ बटुकायेति कीलकं ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ ॐ सहस्रारे महाचक्रे कर्पूरधवले गुरुः ॥४॥ पातु मां बटुको देवो भैरवः सर्वकर्मसु ॥ पूर्वस्यामसितांगो मां दिशि रक्षतु सर्वदा ॥ ५ ॥ आग्नेय्यां च रुरुः पातु दक्षिणे चंडभैरवः ॥ नैर्ऋत्यां क्रोधनः पातु उन्मत्तः पातु पश्चिमे ॥६॥ वायव्यां मां कपाली च नित्यं पायात्सुरेश्वरः ॥ भीषणो भैरवः पातु उत्तरस्यां तु सर्वदा ॥७॥ संहारभैरवः पायादीशान्यां च महेश्वरः ॥ ऊर्ध्वं पातु विधाता च पाताले नंदको विभुः ॥ ८ ॥ सद्योजातस्तु मां पायात्सर्वतो देवसेवितः ॥ वामदेवो वनांते च वने घोरस्तथाऽवतु

॥ ९ ॥ जले तत्पुरुषः पातु स्थले ईशान एव च ॥ डाकिनी पुत्रकः पातु पुत्रान् मे सर्वतः प्रभुः ॥ १० ॥
हाकिनीपुत्रकः पातु दारांस्तु लाकिनीसुतः ॥ पातु शाकिनिकापुत्रः सैन्यं वै कालभैरवः ॥११॥ मालिनीपुत्रकः
पातु पशूनश्वान् गजांस्तथा ॥ महाकालोऽवतु क्षेत्रं श्रियं मे सर्वतो गिरा ॥ १२ ॥ वाद्यं वाद्यप्रियः पातु भैर
वो नित्यसंपदा ॥ एतत्कवचमीशान तव स्नेहात्प्रकाशितम् ॥ १३ ॥ नाख्येयं नरलोकेषु सारभूतं सुरप्रियम् ॥
यस्मै कस्मै न दातव्यं कवचं सुरदुर्लभम् ॥ १४ ॥ न देयं परशिष्येभ्यः कृपणेभ्यश्च शंकर ॥ यो ददाति
निषिद्धेभ्यः सर्वभ्रष्टो भवेत्किल ॥ १५ ॥ अनेन कवचेनैव रक्षां कृत्वा विचक्षणः ॥ विचरन्यत्र कुत्रापि न
विघ्नैः परिभूयते ॥ १६ ॥ मंत्रेण रक्षते योगी कवचं रक्षकं यतः ॥ तस्मात्सर्वप्रयत्नेन दुर्लभं पापचेतसाम् ॥
॥ १७ ॥ भूर्जे रंभात्वचि वापि लिखित्वा विधिवत्प्रभो ॥ कुंकुमेनाष्टगंधेन गोरोचनैश्च केसरैः ॥ १८ ॥
धारयेत्पाठयेद्वापि संपठेद्वापि नित्यशः ॥ संप्राप्नोति फलं सर्वं नात्र कार्या विचारणा ॥ १९ ॥ सततं पश्यते
यत्र तत्र भैरवसंस्थितिः ॥ न शक्नोमि प्रभावं वै कवचस्यास्य वर्णितुम् ॥ २० ॥ नमो भैरवदेवाय सर्वभूताय वै
नमः ॥ नमस्त्रैलोक्यनाथाय नाथनाथाय वै नमः ॥ २१ ॥ इति ह० बृ० ध० उ० श्रीबटुकभैरवोपासनाध्याये भैरव
तंत्रे देवीरहस्योक्तं श्रीबटुकभैरवकवचनिरूपणं नाम प्रकरणं द्वितीयम् ॥ २ ॥ श्लो० ॥ ६५ ॥ ॥ अथ श्रीबटु
कभैरवब्रह्मकवचम् ॥ ॥ उक्तं च रुद्रयामले ॥ श्रीदेव्युवाच ॥ भगवन् सर्ववेत्ता त्वं देवानां प्रीतिदायकम् ॥
भैरवं कवचं ब्रूहि यदि चास्ति कृपा मयि ॥ १ ॥ प्राणत्यागं करिष्यामि यदि नो कथयिष्यसि ॥ सत्यं
सत्यं पुनः सत्यं सत्यमेव न संशयः ॥ २ ॥ इत्थं देव्या वचः श्रुत्वा प्रहस्याति स्वयं प्रभुः ॥ उवाच
वचनं तत्र देवदेवो महेश्वरः ॥ ३ ॥ ईश्वर उवाच ॥ बटुककवचं दिव्यं शृणु मत्प्राणवल्लभे ॥ चण्डिकातंत्र
सर्वस्वं बटुकस्य विशेषतः ॥ ४ ॥ तत्र मन्त्राद्यक्षरं तु वासुदेवस्वरूपकम् ॥ शंखवर्णद्वयो ब्रह्मा बटुकं चंद्रशेखरः
॥ ५ ॥ आपदुद्धरणो देवो भैरवः परिकीर्त्तितः ॥ प्रवक्ष्यामि समासेन चतुर्वर्गप्रसिद्धये ॥ ६ ॥ प्रणवं कामदं
विद्याल्लज्जाबीजं च सिद्धिदम् ॥ बटुकायेति विज्ञेयं महापातकनाशनम् ॥ ७ ॥ आपदुद्धारणायेति त्वापदुद्धा
रणं नृणाम् ॥ कुरु द्वयं महेशानि मोहने परिकीर्तितम् ॥८॥ द्वाविंशत्यक्षरो मन्त्रः क्रमेण जगदीश्वरि ॥ ॐ अस्य
श्रीबटुकभैरवब्रह्मकवचस्य भैरव ऋषिः अनुष्टुप् छंदः॥९॥ श्रीबटुकभैरवो देवता मम बटुकभैरवप्रसादसिद्ध्यर्थे जपे
विनियोगः ॥ ॐ पातु शिरसि नित्यं पातु ह्रीं कंठदेशके ॥ १० ॥ बटुकाय पातु नाभौ चापदुद्धारणाय च ॥ 
कुरु द्वयं लिंगमूले त्वाधारे बटुकाय च ॥ ११ ॥ सर्वदा पातु ह्रीं बीजं बाह्वोर्युगलमेव च ॥ षडंगसहितो
देवो नित्यं रक्षतु भैरवः ॥ १२ ॥ ॐ ह्रीं बटुकाय सततं सर्वांगं मम सर्वदा ॥ ॐ ह्रीं पादौ महाकालः पातु
वीरासनो हृदि ॥ १३ ॥ ॐ ह्रीं कालः शिरः पातु कंठदेशे तु भैरवः ॥ गणराट् पातु जिह्वायामष्टभिः शक्तिभिः

सह ॥ १४ ॥ ॐ ह्रीं दंडपाणिर्गुह्यमूले भैरवीसहितस्तथा ॥ ॐ ह्रीं विश्वनाथः सदा पातु सर्वांगं मम सर्वदा ॥
॥ १५ ॥ ॐ ह्रीं अन्नपूर्णा सदा पातु चांसौ रक्षतु चंडिका ॥ असितांगः शिरः पातु ललाटं रुरुभैरवः ॥
॥ १६ ॥ चंडभैरवः पातु वक्रं कण्ठं श्रीक्रोधभैरवः ॥ उन्मत्तभैरवः पातु हृदयं मम सर्वदा ॥ १७ ॥ नाभिदेशे
कपाली च लिंगे भीषणभैरवः ॥ संहारभैरवः पातु मूलाधारं च सर्वदा ॥ १८ ॥ बाहुयुग्मं सदा पातु भैरवो मम
केवलम् ॥ हंसबीजं हृदि पातु सोहं रक्षतु पादयोः ॥ १९ ॥ प्राणापानौ समानं च उदानं व्यानमेव च ॥
रक्षंतु हारमूले च दशदिक्षु समंततः ॥ २० ॥ प्रणवः पातु सर्वांगं लज्जाबीजं महाभये ॥ इति श्रीब्रह्मकवचं भैर
वस्य प्रकीर्त्तितम् ॥ २१ ॥ चतुर्वर्गप्रदं नित्यं स्वयं देवप्रकाशितम् ॥ यः पठेच्छृणुयान्नित्यं धारयेत्कवचोत्तमम् ॥
॥ २२ ॥ सदानंदमयो भूत्वा लभते परमं पदम् । य इदं कवचं देवी चिन्तयेन्मन्मुखोदितम् ॥ २३ ॥ कोटि
जन्मार्जितं पापं विनश्यति च तत्क्षणात् ॥ जलमध्येऽग्निमध्ये वा दुर्ग्रहे शत्रुसंकटे ॥ २४ ॥ कवचस्मरणा
देवि सर्वत्र विजयी भवेत् ॥ भक्तियुक्तेन मनसा कवचं पूजयेद्यदि ॥ २५ ॥ कामतुल्यस्तु नारीणां रिपूणां च
यमोपमः ॥ तस्य पादांबुजद्वंद्वं राज्ञां मुकुटभूषणम् ॥ २६ ॥ तस्य भूतिं विलोक्यैव कुबेरोपि तिरस्कृतः ॥
अस्य विज्ञानमात्रेण मन्त्रसिद्धिर्न संशयः॥२७॥ इदं कवचमज्ञात्वा यो जपेद्बटुकं नरः ॥ न चाप्नोति फलं तस्य
परं नरकमाप्नुयात् ॥ २८ ॥ मन्वन्तरत्रयं स्थित्वा तिर्यग्योनिषु जायते ॥ इहलोके महारोगी दारिद्र्येणाति
पीडितः ॥ २९ ॥ शत्रूणां वशगो भूत्वा करपात्री भवेज्जडः ॥ देयं पुत्राय शिष्याय शांताय प्रियवादिने ॥ ३० ॥
कार्पण्यरहितायालं बटुभक्तिरताय च ॥ यः परस्मै प्रदाता वै तस्य तस्यातिसत्वरम् ॥ ३१ ॥ आयु
र्विद्या यशो धर्मं बलं नश्यत्यसंशयम् ॥ इति ते कथितं देवि गोपनीयं स्वयोनिवत् ॥ ३२ ॥ इति श्री ह०
बृ० ध० उ० श्रीबटुकोपासनाध्याये रुद्रयामलोक्तं श्रीबटुकभैरवब्रह्मकवचनिरूपणं नाम प्रकरणं तृतीयम् ॥
॥ ३ ॥ श्लो० ॥ ९७ ॥ अथ श्रीबटुकभैरवकवचम् ॥ ॥ देव्युवाच ॥ ॥ देवदेव जगन्नाथ त्रिनाथ
श्रीत्रिलोचन ॥ भवत्प्रसादाद्भगवन्भैरवस्य महात्मनः ॥ १ ॥ कवचं श्रोतुमिच्छामि त्वत्स्नेहातिशयादहम् ॥
॥ शिव उवाच ॥ प्राणिनां रक्षणार्थं च ब्रवीमि सुमुखे गुणान् ॥ २ ॥ वर्मणो भैरवस्यास्य शिवब्रह्मा
ऋषिः स्मृतः ॥ छंदोनुष्टुप् तथा देवो भैरवो बटुकात्मजः ॥ ३ ॥ ऐश्वर्यस्याभिवृद्ध्यर्थमिष्टार्थं च नियुज्यते
॥ ४ ॥ शूलखड्गडमरूलसत्करं सव्यहस्तमपरं करोज्ज्वलम् ॥ संततं हृदि भजामि भैरवं स्वाधिरूढमधिकारसि
द्धये ॥ ५ ॥ दिग्वाससं कमलपत्रविशालनेत्रं भस्मांगरागमभयं प्रभुमादिदेवम् ॥ ध्यायामि तं बटुकना
थमहर्निशं मे सर्वार्थसिद्धिमतुलां कृपया दिशंतम् ॥ ६ ॥ एवं ध्यात्वा तु देवेशं बटुकाख्यं महाबलम् ॥

उच्चरेत्कवचं पश्चाद्देवताभीष्टसिद्धिदम् ॥ ७ ॥ शिरो मे भैरवः पातु भालं पुरनिषूदनः ॥ दृशौ पातु त्रिनेत्रो
मे श्रवणं नीलकंठकः ॥ ८ ॥ दिग्वासा मे पातु कंठं नासिकामगन्यभाक् ॥ ओष्ठौ त्रिपुरघाती मे जिह्वां
पातु कपालधृक् ॥ ९ ॥ दंतान्पातु क्रतुध्वंसी चिबुकं भूतवासकः ॥ कपाली पातु मे ग्रीवां स्कंधौ पातु गजां
तकः ॥ १० ॥ भुजौ मे पातु कौमारो हृदयं क्षेत्रपालकः ॥ अभीरुर्मे स्तनौ पातु वक्षः पातु महेश्वरः ॥ ११ ॥
कुक्षौ मे पातु संहर्ता नाभिं मे षण्मुखप्रियः ॥ भूतनाथः कटिं पातु गुह्यं पातु जटाधरः ॥ १२ ॥ ऊरू पातु
वृषारूढो जानुनी भूतभावनः ॥ श्मशानवासी मे पातु पातु सर्वांगमीश्वरः ॥ १३ ॥ य इदं कवचं देवि पठे
त्प्रयतमानसः ॥ तस्यैश्वर्याभिवृद्ध्यर्थंमिष्टान्नं च ददाम्यहम् ॥ १४ ॥ रोगार्त्तो मुच्यते रोगात्पुत्रार्थी लभते
सुतान् ॥ जपित्वा श्रद्धया कन्या आयुष्मंतं पतिं लभेत् ॥ १५ ॥ विद्याविनयसंपन्नं सुकुलीनं सुरूपिणम् ॥
जपित्वा विधवा नारी वैधव्यं नाप्नुयात्क्वचित् ॥ १६ ॥ जपित्वा कवचं प्रातर्मुच्यते नात्र संशयः ॥ नास्ति
तस्यापमृत्युश्चाकालमृत्युः कदाचन ॥ १७ ॥ इह लोके सुखं भुक्त्वा पुत्रपौत्रैः सुबांधवैः ॥ अंते कैलासमा
विश्य मम पादतलं व्रजेत् ॥ १८ ॥ तस्मात्सर्वप्रयत्नेन जपेन्नित्यमतंद्रितः ॥ १९ ॥ ये भक्तियुक्ताः कवचं
पठंति ते वै कुले स्वे कुलिनो वसंति ॥ तेजोधिकं विंशतिसंख्यया दिने कैलासमाप्नोति मम प्रसादात् ॥ २० ॥
एतत्ते कथितं देवि यन्मां त्वं परिपृच्छसि ॥ त्वत्स्नेहातिशयादुक्तं कवचं भैरवात्मकम् ॥ २१ ॥ इति
श्रीह० बृ० ध० उपा० स्तबके श्रीबटुकभैरवोपा० अध्याये श्रीबटुकभैरवकवचनिरूपणं नाम प्रकरणं चतुर्थम् ॥
॥ ४ ॥ अथ चतुर्थं बटुकभैरवपंजरकवचम् ॥ ॥ उक्तं च शक्तिरहस्ये ॥ पार्वत्युवाच देव
देव महादेव संसारप्रियकारक ॥ पंजरं बटुकस्यास्य कथनीयं मम प्रभो ॥ १ ॥ श्रीशिव उवाच ॥ पूर्वं
भस्मासुरत्रासाद् भयविह्वलतां स्वयम् ॥ पठनादेव मे प्राणा रक्षिताः परमेश्वरि ॥ २ ॥ सर्वदुष्टविनाशाय सर्व
रोगनिवारणम् ॥ दुःखशांतिकरं देवि ह्यल्पमृत्युभयापहम् ॥ ३ ॥ राज्ञां वश्यकरं चैव त्रैलोक्यविजयप्रदम् ॥
सर्वलोकेषु पूज्यश्च लक्ष्मीस्तस्य गृहे स्थिरा ॥ ४ ॥ अनुष्ठानं कृतं देवि पूजनं च दिनेदिने ॥ विना पंजरपाठेन
तत्सर्वं निष्फलं भवेत् ॥ ५ ॥ अस्य श्रीबटुकभैरवपंजरकवचमंत्रस्य कालाग्निरुद्रः ऋषिः अनुष्टुप्छंदः
बटुकभैरवो देवता ॥ ह्रां बीजम् ॥ ॐ भैरवी वल्लभा शक्तिः ॥ ६ ॥ ॐ दंडपाणये नमः कीलकम् ॥ मम
सकलकामनासिद्ध्यर्थे जपे विनियोगः ॥ ७ ॥ ॐ ह्रां प्राच्यां डमरुहस्तो रक्तवर्णो महाबलः ॥
प्रत्यक्षमहमीशानबटुकाय नमोनमः ॥ ८ ॥ ॐ ह्रीं दंडधारी दक्षिणे च पश्चिमे खड्गधारिणे ॥ ॐ
हूं घंटावादी मूर्तिरुत्तरस्यां दिशि तथा ॥ ९ ॥ ॐ ह्रैं अग्निरूपो ह्याग्नेय्यां नैर्ऋत्यां च दिगम्बरः ॥ ॐ ह्रौं सर्व
भूतस्थो वायव्ये भूतानां हितकारकः ॥ १० ॥ ॐ ह्रश्चाष्टसिद्धिश्च ईशाने सर्वसिद्धिकरः परः ॥ प्रत्यक्षमहमी

शानबटुकाय नमोनमः ॥ ११ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः स्वाहा ऊर्ध्वं खेचरिणं न्यसेत ॥ रुद्ररूपस्तु पाताले बटुकाय नमोनमः ॥ १२ ॥ ॐ ह्रीं बटुकाय मूर्ध्नि ललाटे भीमरूपिणम् ॥ आपदुद्धरणं नेत्रे मुखे च बटुकं न्यसेत् ॥ १३ ॥ कुरु कुरु सर्वसिद्धिर्देहे गेहे व्यवस्थितः ॥ बटुकाय ह्रीं सर्वदेहे विश्वस्य सर्वतो दिशि ॥ १४ ॥ आपदुद्धारकः पातु ह्यापादतलमस्तकम् ॥ हसक्षमलवरयुं पातु पूर्वे दंडहस्तस्तु दक्षिणे ॥ १५ ॥ हसक्षमलवरयुं नऋत्ये हसक्षमलवरयुं पश्चिमेऽवतु ॥ सर्वभूतस्थो वायव्ये हसक्षमलवरयुं घंटावादिन उत्तरे ॥ १६ ॥ हंसः सोहं तु ईशाने चाष्टसिद्धिकरः परः ॥ शं क्षेत्रपाल ऊर्ध्वे तु पाताले शिवसन्निभः ॥ १७ ॥ एवं दशदिशो रक्षेद्बटुकाय नमोनमः ॥ इति ते कथितं ह्रीं श्रीं क्लीं ऐं सदावतु ॥ १८ ॥ ॐ फ्रें हुं फट् च सर्वत्र त्रैलोक्ये विजयी भवेत् ॥ लक्ष्मीं ऐं श्रीं लँ पृथिव्यां च आकारो हं ममावतु ॥ १९ ॥ स्रौं प्रौं व्रौं ॐ यं वायव्यां रं रं रं तेजोरूपिणम् ॥ ॐ कं खं गं घं ङं बटुकं चं छं जं झं ञं कपालिनम् ॥ २० ॥ टं ठं डं ढं णं क्षेत्रेशं तं थं दं धं नं उमाप्रियम् ॥ पं फं बं भं मं मम रक्ष यं रं लं भैरवोत्तमम् ॥ २१ ॥ वं शं षं सं आदिनाथं ळं क्षं वै क्षेत्रपालकम् ॥ एवं पंजरमाख्यातं सर्वसिद्धिकरं भवेत् ॥ २२ ॥ दुःखदारिद्र्य शमनं रक्षकं सर्वतो दिशः ॥ आवश्यं सर्वतो वक्ष्यं सर्वबीजैश्च संपुटम् ॥ २३ ॥ सर्वरोगहरं दिव्यं सर्वत्र सुख माप्नुयात् ॥ एवं रहस्यमाख्यातं देवानामपि दुर्लभम् ॥ २४ ॥ वज्रपंजरनामेदं ये शृण्वंति वरानने ॥ आयुरा रोग्यमैश्वर्यं कीर्तिलाभः सुखं जयः ॥ २५ ॥ लक्ष्मी मनोरमा बुद्धिस्तेषां गेहे व्यवस्थिता ॥ सुशीलाय सुदां ताय गुरुभक्तिपराय च ॥ २६ ॥ तस्य शीघ्रं च दातव्यमन्यथा न कदाचन ॥ गोपनीयं प्रयत्नेन सर्वगोप्य मयं भवेत् ॥ २७ ॥ यस्मै कस्मै न दातव्यं न दातव्यं कदाचन ॥ राज्यं देयं शिरो देयं न देयं भैरवाक्षरम् ॥ २८ ॥ एककालं द्विकालं वा त्रिकालं पठते नरः ॥ सर्वपापविनिर्मुक्तो शिवेन सह मोदते ॥ २९ ॥ इति श्रीह. बृ. ध. उपा. स्तबके श्रीबटुकभैरवोपासनाध्याये शक्तिरहस्योक्तश्रीबटुकभैरवपंजरकवचनिरूपणं नाम प्रकरणं पंचमम् ॥ ५ ॥ छ ॥ ॥ अथ श्रीबटुकभैरवबकारादिसहस्रनामस्तोत्रम् ॥ उक्तं च भैरवयामलतन्त्रे ॥ श्रीपार्वत्युवाच ॥ यद्गुह्यं परमाख्यातं त्रिषु लोकेषु दुर्लभम् ॥ कोटिग्रंथेषु गोप्यं यत्सूचितं न प्रकाशितम् ॥ १ ॥ सर्वसंपत्प्रदं पुण्यं सर्वापत्क्षयकारकम् ॥ तदहं श्रोतुमिच्छामि बटुक स्य महात्मनः ॥ २ ॥ नाम्नां सहस्रं दिव्यानां बकाराख्यं महात्मनाम् ॥ कृपया वद देवेश यद्यहं तव वल्लभा ॥ ३ ॥ श्रीमहादेव उवाच ॥ सूचितं मे त्वयि स्नेहादप्रकाश्यं कुलेश्वरि ॥ नाम्नां सहस्रं कोटीनां सारतः सारमुत्तमम् ॥ ४ ॥ न वक्तव्यं त्वया देवि चित्तस्थं मम पार्वति ॥ अप्रकाश्यतमं देवि प्राणेभ्यो ये परे प्रिये ॥ ५ ॥ ब्रह्मभैरव उवाच ॥ इत्युक्त्वा भगवान्देवो बोध्यः स्वात्मानमात्मना ॥ पुलकांचितसर्वांगो न

च किंचिदुवाचह ॥ ६ ॥ श्रीपार्वत्युवाच ॥ ॥ देवदेव महादेव भक्तानुग्रहकारक ॥ नाम्नां सहस्रं दिव्यानां बकाराख्यं शुभप्रदम् ॥ ७ ॥ गोप्यं तु सर्वगोप्यानां वद मे परमेश्वर ॥ अप्रकाश्यं कुलेशान यद्यहं प्राण वल्लभा ॥ ८ ॥ श्रीमहादेव उवाच ॥ शृणु देवि महागुह्यं रहस्यं परमाद्भुतम् ॥ न कस्यचिन्मया ख्यातमद्यापि प्राणवल्लभे ॥ ९ ॥ सुखसंपत्प्रदं देवि धनधान्यजयप्रदम् ॥ भूतग्रहपिशाचानां स्मरणादेव नाशनम् ॥ १० ॥ कृत्याद्रोहादिशमनं बालग्रहनिवारणम् ॥ चतुर्वर्गचतुर्भद्रप्रदमेतन्न संशयः ॥ ११ ॥ बटुकस्येह नामानि प्रयुतान्यर्बुदानि च ॥ सारात्सारतरं शेषं सहस्रं शृणु यत्नतः ॥ १२ ॥ सुधासिंधुमणिद्वीपे पारिजातवनावृते ॥ प्रक्षालयतु भूमध्ये प्रेतभूतस्थमीश्वरम् ॥ १३ ॥ विपरीतरतासक्तं कौमारं विलसद्धृदि ॥ चतुर्बाहुं त्रिनयनमंजनाद्रिसमप्रभम् ॥ १४ ॥ जटाजूटधरं देवं शशांककृतशेखरम् ॥ भुजंगमेखलायुक्तं दिग्वाससमनाकुलम् ॥ १५ ॥ डमरुं च कपालं च वरं शूलं क्रमात्करैः ॥ दधतं च कटैर्दंतैः करालवदनं विभुम् ॥ १६ ॥ ध्यात्वैवं साधकस्तुष्टो जपेत्सिद्धिमवाप्नुयात् ॥ ब्रह्मभैरव उवाच ॥ नाम्ना सहस्रं दिव्यानां बटुकस्य महात्मनः ॥ १७ ॥ वक्ष्यामि तत्त्वतः सम्यक् सारेभ्यः सारमुत्तमम् ॥ सर्वमङ्गलमांगल्यं सर्वोपद्रवनाशनम् ॥ १८ ॥ सर्वपापहरं पुण्यं साधकानां सुखप्रदम् ॥ आयुःपुष्टिश्रीकरं च पुत्रपौत्रादिवर्धनम् ॥ १९ ॥ बटुकस्तोत्रमुख्यस्य महादेव ऋषिः स्मृतः ॥ महाबटुकभैरवो देवता परिकीर्तिता ॥ २० ॥ छंदो विराट् सर्वकार्ये सिद्ध्यर्थं साधकस्य तु ॥ बटुकस्य चतुर्थ्यंतं विनियोगः प्रकीर्तितः ॥ २१ ॥ महादेवेन यत्प्रोक्तं पार्वत्यै सर्वमंगलम् ॥ सर्वशत्रुक्षयकरं सर्वापद्विनिवारणम् ॥ २२ ॥ सर्ववेदांगमुख्यं च सारात्सारांशमुत्तमम् ॥ देवदेवेन यत्प्रोक्तं हिमाचलसुतां प्रति ॥ २३ ॥ अत्युग्रकृतिभूतांगीं कारुण्यात्प्रीतचेतसा ॥ तदेव ते प्रवक्ष्यामि गुरुभक्ताय सांप्रतम् ॥ २४ ॥ अतियत्नान्मया प्राप्तं दक्षिणाक्रमयोगतः ॥ तदहं संप्रवक्ष्यामि यच्छ्रुतं परमाद्भुतम् ॥ २५ ॥ कुलीनाय च शांताय भक्ताय च सुबुद्धये ॥ धनमानप्रदात्रे च देवार्चनरताय च ॥ २६ ॥ देवतामानत्यक्ताय धर्मबुद्धिपराय च ॥ वदान्याय च योग्याय प्रणयायादृतात्मने ॥ २७ ॥ गोत्रप्रदेयमाज्ञप्तमिति देव्या पुरो मम ॥ अतस्तुभ्यं प्रवक्ष्यामि करुणार्द्रे महात्मने ॥ २८ ॥ बटुकस्य च देवस्य मदोन्मत्तस्य शूलिनः ॥ स्तोत्रं सहस्रनामाख्यं बकाराख्यं सुसंयुतम् ॥ २९ ॥ यस्य स्मरणमात्रेण श्रवणेन प्रयत्नतः ॥ पठनात्पाठनाद्वापि सर्वसिद्धिमुपालभेत् ॥ ३० ॥ यत्र स्थितमिदं स्तोत्रं तत्र श्रीस्सर्वतो सुखी ॥ तत्र सर्वत्र विजयो भवत्येव न संशयः ॥ ३१ ॥ तत्र लोका वशे सर्वे सर्वेषां भैरवस्य तु ॥ उपमन्यो बहुत्वेकं न वाच्यं यस्य कस्यचित् ॥ ३२ ॥ गुरुं संतोष्य यत्नेन पठितव्यं समाहितैः ॥ ३३ ॥ ब्रह्मभैरव उवाच ॥ ॐ अस्य श्रीबटुकभैरवस्य बकाराख्यसहस्रनामस्तोत्रस्य ॥ महादेव ऋषिः ॥ अनुष्टुप् छंदः ॥

श्रीबटुकभैरवो देवता ॥ बं बीजम् ॥ ह्रीं शक्तिः ॥ क्लीं कीलकम् ॥ ममाभीष्टसिद्ध्यर्थे पाठे विनियोगः ॥ महादेवर्षये नमः शिरसि ॥ अनुष्टुप्छंदसे नमः मुखे ॥ श्रीबटुकभैरवदेवतायै नमः हृदये ॥ बं बीजाय नमः गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ ह्रीं कीलकाय नमो नाभौ ॥ विनियोगाय नमः सर्वांगे ॥ करषडंगन्यासः ॥ ॐ बां ईशानाय नमः अंगु० ॥ ॐ बीं तत्पुरुष नमः तर्ज० ॥ ॐ बूं अघोराय नमः मध्य० ॥ ॐ बैं वामदेवाय नमः अना० ॥ ॐ बौं सद्योजाताय नमः कनि० ॥ ॐ बः रौद्राय नमः करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ ॥ ध्यानं तु कामनाविषयेण ध्यात्वा सात्त्विकराजसतामसं च ॥ ॐ बं बं बं बटुको वीरो बां बां बां बटुकस्तथा ॥ बीं बीं बीं बटुको वीरो बूं बूं बूं बटुकस्तथा ॥ ३४ ॥ बैं बैं बैं बटुकः क्रोध्यो बौं बौं बौं बटुकस्तथा ॥ बः बः बः बटुको रावो ब्रः ब्रः ब्रः शब्दतत्परः ॥ ३५ ॥ बं यतित बिं बध्वारो बं हृ बं प्रीति कारकः ॥ वज्रायुधो वज्रहस्तो वज्रायुधभयावहः ॥ ३६ ॥ वज्रायुधांगसंपृष्टो वज्रायुधपदः सदा ॥ वज्रायुधस्तुतो वज्री बुधराधवरः स्मृतः ॥ ३७ ॥ वज्रायुधःसुखकरो वज्रायुधसुखप्रदः ॥ वज्रायुधो वज्रश्रेष्ठो वज्रायुधगतिः स्मृतः ॥ ३८ ॥ वज्रायुधः प्राणत्रातो वज्रायुधसुखप्रदः ॥ वज्रायुधो वज्रश्रेष्ठो वज्रायुधगतिः स्मृतः ॥ वज्रायुधः प्राणत्रातो वज्रायुधपदः स्मृतः ॥ ३९ ॥ वज्रह तो वज्रपादो वज्रदंष्ट्राग्रजिह्वकः ॥ वज्रमुखो वज्रकुलो वज्र स्थापिंगलः स्मृतः ॥ वज्रायुधप्रियसखो वज्रायुधो वज्रप्रीतिहा ॥ ४० ॥ वज्रायुधप्राणित्रातो वज्रायुधवरप्रदः ॥ वज्रायुधा शमनो वज्रायुधविधारकः ॥ ४१ ॥ वज्रायुधप्राणदाता वज्रायुधपरायणः ॥ वज्रविज्ञानसंभावो वज्रसेव्यो वरप्रदः ॥ ४२ ॥ वज्रसेव्यप्रियः प्राणो वज्रसेव्य यः सदा ॥ वज्रप्रियो वज्रमयो वज्रतेजप्रवर्त्तकः ॥ ४३ ॥ वज्रनिधिर्वज्रप्राणो वज्रसेव्यवरप्रदः ॥ वज्राधीशो वज्रधरो बंधुपुष्पाजवो धवः ॥ ४४ ॥ बंधुपुष्प प्रतीकाशो बंधुद्रुमसमागमः ॥ बंधुपुष्पश्च बंधूग्रः बंधुपुष्पजयोद्भवः ॥ ४५ ॥ बंधुपुष्पप्रपूजश्च बंधुपुष्पस्वरू पकः ॥ बंधुपुष्पप्रतीकाशो बंधूकारुण्यविग्रहः ॥ ४६ ॥ बंधूकारुणनीलो भ्रूः बंधूकपुष्पवासिनः ॥ बंधूककुसु मस्निग्धो बंधूककुसुमनोत्सवः ॥ ४७ ॥ बंधूकपुष्पकिरणो बंधूकपुष्पपालकः ॥ बंधूककुसुमनोध्येयो बंधूककुसुमन प्रभः ॥ ४८ ॥ बंधूककुसुमनज्ञाता बंधूककुसुमाधरः ॥ बंधूककुसुमोल्लासो बंधूकपुष्पवर्षिणो ॥४९॥ बंधूककुसुमा नंदो बंधूकवनवासिनः ॥ बंधूककुसुमोत्साहो बन्धूकपुष्परूपकः॥५०॥ बन्धूककुसुमोन्मादो बन्धूकपुष्पधारिणः॥ बन्धूककुसुमाराधो बंधूककुसुमोद्भवः ॥५१॥बन्धूककुसुमप्राणो बन्धूककुसुमार्चितः॥बन्धूकपुष्पवटिको बंधूकपुष्प तर्पितः॥५२॥ बन्धूकपुष्पमुकुटो बंधूककुसुमप्रियः॥बन्धूककुसुमाढ्यो बंधूकपुष्पविग्रहः॥५३॥बन्धूककुसुमप्रख्यो बन्धूककुसुमात्मकः ॥ बन्धूककुसुमप्राज्ञो बन्धूकपुष्पवर्त्तिकः ॥५४॥ बन्धूकपुष्पसर्वस्वो बन्धूकपट्टपूरकः॥बन्धूक पदसर्वस्वो बन्धूकपट्टपूरकः ॥ ५५ ॥ बकुलपुष्पसंपूज्यो बकुलपुष्पहोमदः ॥ बकुलपुष्पमध्यस्थो बकुलफल

भोजनः ॥ ५६ ॥ बकुलकाननांतस्थो बकुलावालपाशकः ॥ बकुलाचलराध्यश्च बकुलासुखिपुत्रकः ॥ ५७ ॥
बकुलकुसुमप्रीतो बकुलकुसुमार्चितः ॥ बकुलपुष्पनिलयो बकुलपुष्पवासिनः ॥ ५८ ॥ बकुलकुसुमज्ञातो
बकुलपुष्पधारकः ॥ बकुलकुसुमोल्लासो बकुलपुष्पवर्तिनः ॥ ५९ ॥ बकुलकुसुमानन्दोबकुलबनवासिनः ॥ बकुल
कुसुमोत्साहो बकुलपुष्परूपकः ॥६०॥ बकुलकुसुमोन्मादो बकुलपुष्पधारकः ॥ बकुलकुसुमाराध्यो बकुलकुसुमो
द्भवः॥६१॥ बकुलकुसुमप्राणो बकुलकुसुमार्चितः ॥ बकुलपुष्पखचितो बकुलपुष्पतर्पितः॥६२॥ बकुलपुष्पमुकुटो
बकुलकुसुमप्रियः ॥ बकुलकुसुमोदर्पो बकुलपुष्पविग्रहः ॥६३॥ बकुलपुष्पमाली च बकुलकुसुमात्मकः ॥ बकुल
कुसुमप्राज्ञो बकुलपुष्पवर्त्तकः ॥ ६४ ॥ बकुलपुष्पधारी च बकुलनिंदकांतकः ॥ बकुलप्रदसर्वस्वो बदरीफल
भोजनः ॥ ६५ ॥ बद्रिकाश्रमवासश्च बद्रिकाचलपुंड्रकः ॥ वसुदो वसुधाराध्यो वसुदानपरायणः ॥ ६६ ॥
बहुनेत्रो बहुलास्यो बहुहस्तो बहुप्रदः ॥ बह्वाननो बहुकर्णो बहुपापविनाशनः ॥ ६७ ॥ वल्लभो वल्लभापीतो
वल्लभाबहुरूपकः ॥ बहुगुणश्च सर्वोघो बहुगुणपरायणः ॥ ६८ ॥ बहुगुणश्च संप्रीतो बहुगुणप्रकाशकः ॥
बहुगुणसुसपूज्यो बहुगुणस्वरूपकः ॥ ६९ ॥ बहुगुणसुसंहृष्टो बहुगुणप्रधारणः ॥ बकारवर्णसर्वांगो बकाररूपधारणः
॥ ७० ॥ बकारिहस्तिभूषाढ्यो बकारमुकुटस्थितः ॥ बकारहृदयाराध्यो बकाराभरणाकृतः ॥ ७१ ॥ बकारण
वधारुष्टो बंबीजतोषितः सदा ॥ वारुणीजयसंतुष्टो वारुणीपानसुन्दरः ॥ ७२ ॥ वारुणीचुंबनानंदो वारुणीमंडले
स्थितः ॥ वारुणीगतगम्यश्च वारुणीप्रेमचन्द्रिकः ॥ ७३ ॥ वारुणीमुखमध्यस्थो वारुणीगणमंडितः ॥ वारुणी
मंडलानंतो वारुणीकुंडरूपिणः ॥ ७४ ॥ वारुणीमनसा राध्यो वारुणीतत्त्वतः प्रियः ॥ वारुणीमोदरसिको वारुणी
मोदवासिनः ॥ ७५ ॥ वारुणीभोगरसिको वारुणीकुचमंडनः ॥ वारुणीयोगमार्गस्थो वारुणीयोगरूपिणः
॥ ७६ ॥ वारुणीपूजकः प्राणो वारुणीनिंदकांतकः ॥ वारुणीप्राणसन्मान्यो वारुणीदृष्टिगोचरः ॥ ७७ ॥
वारुणीकेशसंमार्जो वारुणीनाभिमध्यगः ॥ वारुणीमोदसंप्रीतो वारुणीमोदरूपकः ॥ ७८ ॥ वारुणीहास्यसं
प्रीतो वारुणीध्यानतत्परः ॥ वारुणीवाक्यरसिको वारुणीकुंडपूजकः ॥ ७९ ॥ वारुणीपाननंदो भूर्वारुणीरति
तत्परः ॥ वारुणीतांडवानंदनायको वारुणार्णवः ॥ ८० ॥ वारुणीकुंडमध्यस्थो वारुणीकुंडसुंदरः ॥ वारुणीशास्त्रसं
प्रीतो वारुणीमध्यसुंदरः ॥८१॥ वारुणीभोगरसिको वारुणीमृतदीर्घिकः ॥ वारुणीसौख्यदः प्रीतो वारुणीचंद्रसुन्दरः
॥ ८२ ॥ बिल्वो बिल्वकरो बिल्वो बिल्वपत्रप्रपूजकः ॥ बिल्ववृक्षसमागम्यो बिल्वपत्रस्थबिल्वभूः ॥ ८३ ॥ 
बिल्वपुष्पप्रियः प्राणो बिल्वपुष्पप्रमोदकः ॥ बिल्वपुष्पप्रपूज्योथ बिल्वपुष्पस्वरूपकः ॥ ८४ ॥ बिल्वपत्रमहोदश्च
बिल्वफलप्रभोजनः ॥ बिल्वप्रियोबिल्वमयोबिल्ववृक्षनिवासिनः॥८५॥बिल्ववृद्धिकरो बिल्वप्रियो बिल्वनिषेविनः ॥
बिल्वपत्रस्थसर्वांगो बिल्ववृक्षप्रपालकः ॥ ८६ ॥ विभावसुसमं तेजो विभावसुसमागमः ॥ विभावसुर्मदगतिर्विभाव

सुरिवामतिः ॥ ८७ ॥ विभावसुप्रपूज्यश्च विभावसुप्रपूजकः ॥ बिंबाधरो बिंबरूपो विश्वविद्याविनोदनः ॥ ८८ ॥
विगम्या वेदकर्त्ता च विधिकर्त्ता विधिप्रभः ॥ विधिविध्याता विनदो विधिगम्यो विधिवरः॥ ८९ ॥ विधिसपत्रमू
र्तिश्च वधिशापविमोचकः ॥ विधिशास्त्रो विधिप्राज्ञो विदुषो गुरुदेवता ॥ ९० ॥ विक्रधिक्रमसंचारो विधिशास्त्र
विचारणः ॥ विविधिक्रमसंचारो विविद्दक्ष विविधिक्रमः ॥ ९१ ॥ विधुपुत्रप्रियसखो विधिपुत्रभयावहः ॥
विधिपुत्रपरित्राता विधिपुत्रवरप्रदः ॥ ९२ ॥ विधुविज्ञानविभवो विधुशीर्षेषु शोभनः ॥ विश्वामित्रसुसंपन्नो
विश्वामित्रवरप्रदः ॥ ९३ ॥ विश्वामित्रमूर्तिधारी विश्वामित्रस्वरूपकः ॥ विश्वामित्रगुरुश्रेष्ठो विश्वामित्रप्रभंजकः
॥ ९४ ॥ विश्वामित्रयोगप्रियो विश्वामित्रनुतिप्रियः ॥ विश्वामित्रपरिज्ञातो विश्वामित्रयोगक्षमः ॥ ९५ ॥
विश्वमित्रार्तिशमनो ॥ विश्वामित्रार्तिनाशनः ॥ विषदो विषदाचारो विषपाने सदा रतः ॥ ९६ ॥ विमलो
विमलांगश्च विमलाचारतत्परः ॥ विश्वेश्वरो विश्वराजा विघ्नसंघविनाशनः ॥ ९७ ॥ विनायको विघ्नराजो
विघ्नविच्छेदनाशनः ॥ बिंबाधरो बिंबरुचिर्विश्व द्याविनोदनः ॥ ९८ ॥ वीणाधरो वीणानाथो वीणावाद्य
परायणः ॥ वीरमुख्यो वीरप्रियो वीरस्थायोगणः सदा ॥ ९९ ॥ वीरमन्त्रो वीरश्रेष्ठो बीरस्त्रीगमनोपरः ॥
बुद्धिबुद्ध्याकृतिधरो बुद्धिशावी बुधप्रियः ॥ १०० ॥ बुद्धिपूर्णो बुद्धिधरो बुद्धिभा बुद्धिदूरगः ॥ बुद्धिर्बुद्धवपु
र्वृद्धिः शरीरो बुद्धिमंडितः ॥ १ ॥ बुद्धिप्रभुश्च बुद्धिभूर्बुद्धिकृतचराचरः ॥ बुद्धिप्रणवसंतुष्टो बुद्धिहीनपराङ्मुखः
॥ २ ॥ बुद्धिभृद्बुद्धिहृत्कर्ता बुद्धिश्रेष्ठो बुद्धिप्रभुः॥ बुधेशो बुधसंतुष्टो बुधैकसदनं सदा ॥ ३ ॥ बुद्धिमांश्चैव
बुद्धिश्च बुद्धिमान्बुद्धिभाजनः ॥ बुद्धिप्रणीतपादाग्रो बुद्धिगीतबुधौजसः ॥ ४ ॥ बुद्धिमान्बुद्धिसंपन्नो बुद्ध्या
नंदितमानसः ॥ बुद्धिमार्गप्रणेता च बुद्धिसंचारचातुरः ॥ ५ ॥ बुद्धिगौणो बुद्ध्याधारो बुद्धिसंबुद्धिचेतनः ॥
बुद्धिरुद्बुद्धिहृन्नित्यं बुद्ध्याग्रो बुद्धिपारदः ॥ ६ ॥ बुद्धिवृद्धिप्रचारोऽभूद्बुद्ध्याबुद्धिविवेकवित् ॥ बुद्ध्याकरो
बुद्धिकरो बुद्धिप्राणविवर्द्धनः ॥ ७ ॥ बुद्धिगूढधरो बुद्धिर्बुद्धिसंचारचेष्टितः ॥ बुद्धिदक्षिणताहार्दो बुद्धिलक्षण
तत्त्ववित् ॥ ८ ॥ बुद्ध्याचारी बुद्धिहारी बुद्धिसुखप्रदायकः ॥ बुद्धिसंस्कृतसंचारी बुद्धितत्त्वविवेकवित् ॥ ९ ॥
बुद्धिगर्वधरो बुद्धिर्बुद्धिगर्वपराभवः ॥ बुद्ध्यधीनो बुद्धितमो बुद्धिलक्षणलालसः ॥१० ॥ बुद्धिगौरवदाता च बुद्धि
दाता बुद्धिप्रदः ॥बुध्योक्तबुद्धिहर्ता च बुद्धिभूबुद्धिवर्द्धनः ॥ ११ ॥ बुद्धिरुद्योगकर्ता च बुद्धिदाता बुद्ध्युक्तकरः ॥
बुद्ध्याचारो बौद्धरूपो बौद्धावतारधृक् सदा ॥ १२ ॥ बू बूं बः बीजस्वरूपो बूं क्षूं हूं मुकुटेश्वरः ॥ बूं क्लीं हूं चंड
कर्ता च लः ब्रूं क्लीं हुं फट्स्वाहा ॥ १३ ॥ वेदज्ञो वेदकर्ता च वेदपाठविशारदः ॥ वेदप्रियो वेदमयो वेदविद्याविधा
रकः ॥ १४ ॥ वेदपाठकरो वेदव्याख्यानकरणक्षमः ॥ वेदांगो वेदरूपश्च वेदमंत्रस्वरूपान् ॥ १५ ॥ वेदवंद्यो
वेदप्राणो वेदपाठो विदाश्रयः ॥ वेदांतगीतचरितो वेदगीतप्रवाहकः ॥ १६ ॥ वेदधर्मसंपन्नोथ वेदधर्मनिकृंतनः ॥

वैद्यो वैद्यपतिर्वैद्यो वैद्यनायकसुंदरः ॥ १७ ॥ वैद्यराजोथ वैद्येशो वैद्यराजनमस्कृतः ॥ वैद्यप्रियो वैद्यप्रीतिर्वै
द्यत्राणगमोध्यतः ॥ १८ ॥ वैद्यनीतिर्गुणो वैद्यो वैद्यानां प्रतिपालकः ॥ वैद्यहर्ता वैद्यकरो वैद्यो वैद्यपतिप्रियः
॥ १९ ॥ वैद्यराजशिरसिजो वैद्यराजशिषम ॥ वैद्यराजार्चितपदो वैद्यराजनमस्कृतः ॥ २० ॥ वैद्यराजो
वैद्यवेशो वैद्यराजभयावहः ॥ बों बों बः बीजरूपश्च बौं बौं बौं बीजरूपकः ॥ २१ ॥ वैदेहीवैनको वैद्यो वैद्याचा
रप्रधारकः ॥ वैश्याचारो वैश्यश्रेष्ठो वैश्यानां कुलदेवता ॥ २२ ॥ वीरभद्रोथ वीरेशो वीरेंद्रो वंदितपदः ॥ वीर
वंद्यो वीरप्राणो वीरबाहुर्वीराश्रयः ॥ २३ ॥ वीरदैत्यप्राणहारी वीरदैत्यापहारकः ॥ वीरार्णवहरो वीरो वीराणां
प्राणवल्लभः ॥ २४ ॥ वीरधर्मसदाराध्यो वीरधर्मनिकेतनः ॥ वीरदैत्यप्राणत्राता वीरदैत्यबलप्रदः ॥ २५ ॥
वीरगर्जितसंपूर्णो वीरब्रह्मांडगर्जितः ॥ वीरपुत्रपरित्राता वीरपुत्रवरप्रदः ॥ २६ ॥ वीरपुत्रप्रियसखो वीरपुत्रभया
पहः ॥ वीरपुत्राभिशमनो वीरपुत्राहिनाशकः ॥ २७ ॥ वीरपुत्रप्राणत्राता वीरभक्तिपरायणः ॥ वीरविज्ञानविभवो
वीरबाहुवरप्रदः ॥ २८ ॥ वीरबाहुस्तुतो वीरो बहुशः शापहारकः ॥ वीरबाहुप्रियो वीरो बहुगौरववर्द्धनः ॥ २९ ॥
वीरबाहुपरित्राता वीरबाहुसुखप्रदः ॥ विश्वभुग्विश्वश्रेष्ठोथ विश्वक्षेत्रकरस्तथा ॥ ३० ॥ बालार्कवर्णो बालोथ
बालार्कतेजसः परः ॥ बालो बालप्रियो बालो बालक्रीडापरायणः ॥ ३१ ॥ वामनो वाग्भवाकारो वाचालो
वाक्पतिप्रियः ॥ वाचामगोचरो वांतो वीणावेणुधरोपरः ॥ ३२ ॥ वाग्भवो वाक्पतिः श्रेष्ठो वाग्देवीप्रियनंदनः ॥
वाग्देवीहृदयानंदो वाग्देवीगर्भसंभवः ॥ ३३ ॥ वाक्सिद्धो वाक्पतिप्राणो वाग्प्रदो वाक्स्वरूपकः ॥ बाणप्र
चारो बाणेशो बाणसारविवेकवित् ॥ ३४ ॥ बाणभूर्बाणसंपन्नो बाणनंदितमानसः ॥ बाणसंधानचतुरो बाणसं
शयसुंदरः ॥ ३५ ॥ बाणयष्टी बाणधरो बाणसंचिसचेतसः ॥ बाणरुग्वानभृन्नित्यं बाणज्ञो बाणपादकः ॥ ३६ ॥
बाणाकारो बाणकरो बाणप्रियविवर्द्धनः ॥ बाणगूढधरो बाणव्राधसंधानचेष्टितः ॥ ३७ ॥ बाणदो बाणसौहा
र्दो बाणलांछनतत्त्ववित् ॥ वाणीसंस्कृतसंचारो वाणीतत्त्वविवेचकः ॥ ३८ ॥ वरदो वरदः स्वस्थो वरदोभय
दायकः ॥ वरदद्रुणयः पाहुर्वसिष्ठाश्रमसेविनः ॥ ३९ ॥ वसिष्ठो वसिष्ठाराद्ध्यो वसिष्ठानंददायकः ॥ वसिष्ठा
भीष्टवरदो वसिष्ठाभयदायकः ॥ ४० ॥ वसिष्ठप्राणवशको वसिष्ठगणधारकः ॥ वामनो वल्लभो वंद्यो वनमाला
विभूषणः ॥ ४१ ॥ वनस्थो वनजो वेद्यो वनराजो वनाश्रयः ॥ वनेचरो वनाधीशो वानरीवनसेवितः ॥ ४२ ॥
वानरो वानराधीशो वानरशत्रुनाशनः ॥ वानप्रस्थाश्रमकृतो वानप्रस्थयोगप्रदः ॥ ४३ ॥ ब्रह्मयोनिर्बृहद्योनि
विश्वयोनिर्विवेकवान् ॥ ब्रह्मविद्ब्रह्मभावश्च ब्रह्मर्षिर्ब्राह्मणप्रियः ॥ ४४ ॥ ब्रह्मदो ब्राह्मणात्मा च ब्रह्मविद्याप्रकाश
कः ॥ ब्रह्मचारी ब्रह्मवेत्ता ब्राह्मणो ब्राह्मणोत्तमः ॥ ४५ ॥ ब्रह्मपुत्रविधेयात्मा ब्रह्मसूत्रार्थनिर्णयः ॥ ब्रह्मगौरवदाता
च ब्रह्मांडो ब्रह्मांडेश्वरः ॥ ४६ ॥ व्योमगम्यो व्योमेशानां व्योमेशभवसुंदरः ॥ व्योमगम्यो व्योमधारो

ब्रह्मगीतप्रचारकः ॥ ४७ ॥ व्योमब्रह्मोपगीतश्च व्योमज्ञो व्योमपारदः ॥ व्योमचरो व्योमरूपो व्योमकेशोऽतिशोभनः ॥ ४८ ॥ व्यालाधिपो व्यालेशानो व्यालस्थो व्यालगः सदा ॥ व्यालमुखो व्यालकर्णो व्यालायतनशोभनः ॥ ४९ ॥ व्यालशायी व्यालश्रेष्ठो व्याघ्राजिनप्रधारकः ॥ वृषाकपी वृषेयात्मा वृषारूढो वृषोदरः ॥ ५० ॥ वृषहा वृषभश्रेष्ठो वृषपर्वा वृषोदरः ॥ वृषगम्यो वृषेशानो वृषगतिर्बृहच्छिखः ॥ ५१ ॥ ब्रह्मधर्मप्रचारोथ बृहच्छत्रप्रपाठकः ॥ बृहद्गतिर्बृहत्कर्णो बृहद्दंतालिशोभनः ॥ ५२ ॥ विश्वात्मा विश्वकर्मा च विश्वेषां परमो हितः ॥ विश्वाश्रयो विश्वव्यापी विश्वबंधुर्विश्वक्रतुः ॥५३॥ विश्वकर्ता विश्वभर्ता विश्वेशो विश्वभूषणः॥ विभावसुश्च संपन्नो विश्वावसुसमागमः ॥ ५४ ॥ विश्वावसुप्रपूज्यश्च विश्वावसुस्वरूपकः ॥ विंध्याचलनिवासश्च विंध्याचलप्रकारणः ॥ ५५ ॥ विद्रुमवर्णो विद्रुमोथ विद्रुमायासरारजः ॥ वह्नीन्द्रो बीजराजेशो बो बो को बौद्ध कांतकः ॥ ५६ ॥ वां बां बू बीजवर्णाद्यो बां बां बूं हुं वषट् स्वाहा नमः ॥ वंकारभैरवो राध्यो वकाराक्षरशोभनः ॥ ५७ ॥ वं वं कूकूटसंसेख्यो वं वं कपालिकेशरः ॥ वं वं तांडवचंडाख्यो वं वं भूतेशभैरवः ॥ ५८ ॥ वं ह्रं स्वाहा घोररूपं वं हूं क्रुं कामदायकः ॥ वं ह्रीं ह्रां कालांतकश्चैव वं ह्रं लं तानवर्द्धनः ॥ ५९ ॥ व ह्रीं हु चंड निर्नाशो वं ह्रीं हुं वीरभैरवः ॥ वौषट्रूपोथ विश्वारौ वं हं हु विश्वरूपकः ॥ ६० ॥ बुं क्रुं हुं ठठः रूपोथ बुं क्लुं हुं फट् वं नमः ॥ बुं हुं स्वयं भुभूषाढचो बुं ह्रीं हुं लिंगरूपकः ॥ ६१ ॥ बुं भैरव बुं योगीशो बुं बुं मानव सुंदरः ॥ बुं हुं विज्ञानभैरवो बुं हुं ह्रीं मम्रृतानंद ॥ ६२ ॥ बुं हुं ह्रीं सिद्धभैरवः असितांगभैरवः ॥ बुं ह्रीं हु रुरुभैरवः बु ह्रीं हुं चडभैरवः ॥ ६३ ॥ बुं ह्रीं हुं क्रोधभैरवो बुं हुं उन्मत्तभैरवः ॥ बुं हुं अघोरभैरवः बुं ह्रीं हु भीतिभैरवः ॥ ६४ ॥ बु हुं संह्रतिभैरवः ॥ बुं हुं संहारभैरवः ॥ बुं हुं अघोरभैरवः बु हुं विमलभैरवः ॥ ॥ ६५ ॥ बुं ह्रीं हु ज्ञानदश्चैव बुं ह्रीं हुं महामोदकः ॥ बुं ह्रीं हुं वह्निभैरवः बुं बुं महारिक्तभैरवः ॥ ६६ ॥ बुं हुं महायोगनरः बुं महामोहनाशनः ॥ बुं ह्रीं हुं योगकिन्नरः बुं हुं कामविनाशकः ॥ बुं ह्रीं ह्रां कामविदाढ्यो बुं ह्रीं हु मन्मथेश्वरः ॥ ६७ ॥ बुं हुं धनपतेश्वरः बुं हुं वैकुंठनायकः ॥ बुं ह्रीं हुं फट्स्वरूपोथ बुं ह्रीं हुं कालफट्तथा ॥ ६८ ॥ बुंहुं ह्रीं फट् शीर्षोथ बुं हुं फट्नेत्रत्रयाय वौषट् ॥ बुं हुं धूमेशभैरवो बुं हुं नटनागेश्वरः ॥ ६९ ॥ बुं हुं फट् भवानीश्वरो बुं हुं फट्घोरभैरवः ॥ बुं हीं हुं घोसबाणाख्यो बुं ह्रीं हुं वादिभैरवः ॥ ७० ॥ बुं ह्रीं हुं दिग्भैरवोथ बुं ह्रीं हं घंटाभैरवः ॥ बुं ह्रीं हु नमनानंदो बुं हीं हुं नेत्रपदेश्वरः ॥ ७१ ॥ बुं हुं त्रिपुरभैरवः बुं हुं त्रैलोक्यभैरवः ॥ बुं ह्रीं हुं स्तंभनेश्वरो बुं ह्रीं हुं गुणसागरः ॥ ॥ ७२ ॥ बुं ह्रीं हु शक्तिदायिन्यो बुं ह्रीं हुं बीजगर्भभृत् ॥ बुं ह्रीं श्रीकंठेश्वरो बुं ह्रीं हु श्रीकंठेश्वरः ॥ ॥ ७३ ॥ बुं ह्रीं हुं सूत्रभैरवः बुं ह्रीं हुं रक्तभैरवः ॥ बुं ह्रीं हुं त्रिमूर्तीश्वरो बुं ह्रीं हु अर्थेशभैरवः ॥ ७४ ॥

बुं हुं सद्योजातेश्वरो बुं हुं अनुग्रहेश्वरः ॥ बुं ह्रीं हुं अक्रूरेश्वरो बुं ह्रीं हुं चंडिकेश्वरः ॥ ७५ ॥ ब्रुं हुं पंच
त्वकेश्वरो ब्रु हुं शिवोत्तमेश्वरः ॥ बुं ह्रीं हुं दारुकेश्वरो ब्रु हुं सकनेत्रेश्वरः ॥ ७६ ॥ ब्रु ह्रीं हुं चतुराननेश्वरो बुं
ह्रीं हुं लांगलीश्वरः ॥ हुं ह्रीं अर्धनारीश्वरो ब्रुं हुं उमाकांतेश्वरः ॥ ७७ ॥ ब्रु ह्रीं हुं त्रिमूर्तीश्वरो ब्रुं ह्रीं हुं
फट्गणेश्वरः ॥ ब्रु हुं मयो बहुगुणो ब्रु ह्रीं हुं पाठतत्परः ॥ ७८ ॥ बुं हुं फट् ब्रुं हुं फट् ब्रुं हुं फट् ब्रुं हुं फट् ॥
बुं हुं फट् ब्रु हुं फट् स्वाहा रूपकः ॥ ७९ ॥ ब्रु हुं फट् हुं फट् वषट् ब्रु हुं फट् ॥ वौषट् ब्रुं ॐ जपसंतुष्टोथ कं
ॐ जपपरायणः ॥ ८० ॥ ब्रुं हुं फट् सिद्धिविद्या च बु हुं फट् लक्ष्मीश्वरः ॥ ब्रु हुं फट् वसुधामीनो ब्रु हुं
फट् सुराधिपाइनः ॥ ८१ ॥ ब्रु हुं फट् शारदापुत्रो ब्रुं हुं फट् माहेश्वरीपुत्रः ॥ ब्रुं हुं राक्षसीपुत्रो ब्रुं हुं फट्
वरेशीपुत्रकः ॥ ८२ ॥ ब्रु हुं फट् यक्षिणीपुत्रो ब्रु हुं फट् कुलेशीपुत्रः ॥ ब्रु हुं फट् ज्ञानपुत्रो ब्रुं हुं फट् शाकिनी
पुत्रः ॥८३॥ बुं ह्रीं तीक्ष्णदंष्ट्रापुत्रो बु ह्रीं तीक्ष्णजिह्वापुत्रः॥ ब्रु नं फट् हाकिनीपुत्रो ब्रुंहुंफट्शाकिनी पुत्रः॥ ८४ ॥
ब्रुं हुं फट् डाकिनीपुत्रो ब्रु हुं फट् लाकिनीपुत्रः ॥ ब्रु हुं फट् मोहिनीपुत्रो ब्रु हुं फट् ठागिनीपुत्रः ॥८५॥ ब्रुं हुं फट्
स्तंभिनीपुत्रो ब्रु हुं फट् जृंभिणीपुत्रः ॥ ब्रु हुं फट् उर्वशीपुत्रो ब्रु हुं फट् मेनकापुत्रः ॥ ८६ ॥ ब्रुं हुं फट् रंभापुत्रो
ब्रुं हुं फट् घृताचीपुत्रः ॥ ब्रु हुं ऊर्ध्वमुखीपुत्रो ब्रुं हु ऊर्ध्वकेशीपुत्रः ॥ ८७ ॥ ब्रु हं फट् तुंडिपुत्रोथ ब्रु हुं फट्
लोलाक्षीपुत्रः ॥ ब्रुं हुं ललजिह्वापुत्रो ब्रुं हु फट् रक्ताक्षापुत्रः ॥ ८८ ॥ ब्रुं हु फट् गंदिनीपुत्रो ब्रुं हुं फट् डंशि
नीपुत्रः ॥ ब्रुं हुं फट् दंडिनीपुत्रो बुं हुं फट् ध्वजिनीपुत्रः ॥ ८९ ॥ ब्रुं फट् खड्गिनीपुत्रो ब्रु हुं फट् शंखिनी
पुत्रः ॥ ब्रुं हुं फट् कंपिनीपुत्रो ब्रुं हुं फट् हासिनीपुत्रः ॥ ९० ॥ ब्रुं ह्रीं फट् तारिणीपुत्रो ब्रु हुं फट् पुरायिपुत्रः ॥
ब्रुं हुं फट् कालीपुत्रो ब्रु हुं फट् कपालीपुत्रः ॥ ९१ ॥ ब्रुं हु फट् तारिणीपुत्रो ब्रुं हुं फट् त्रिपुरापुत्रः ॥
ब्रुं फट् षोडशीपुत्रो ब्रु नं फट् भुवनेशीपुत्रः ॥ ९२ ॥ ब्रुं हुं फट् शन्वेशीपुत्रो ब्रु हु फट् धूमावतीपुत्रः ॥ ब्रु हुं
फट् बगलापुत्रः ब्रुं हुं फट् मातंगीपुत्रः ॥ ९३ ॥ ब्रु हुं फट् बगलापुत्रो ब्रु हुं फट् त्रिकुटापुत्रः ॥ ब्रु हुं फट्
अंचलापुत्रो ब्रुं हुं फट् भूधरापुत्रः ॥ ९४ ॥ ब्रु हुं फट् कल्मषापुत्रो ब्रुं हुं फट् कल्पासिपुत्रः ॥ ब्रुं हुं फट् भोग
दापुत्रो ब्रुं हुं फट् भाविकापुत्रः॥९५॥ ब्रु हुं फट् विजयापुत्रो ब्रु हुं फट् कुरूपापुत्रः ॥ ब्रु हुं फट् ईश्वरीपुत्रो ब्रु हुं
फट्रेवतीपुत्रः ॥ ९६ ॥ ब्रुं हुं फट् त्रिनेत्रापुत्रो ब्रुं हुं फट् कुरूपापुत्रः ॥ ब्रुं हुं फट् स्वरूपापुत्रो ब्रुं हुं फट् त्रिपु
रापुत्रः ॥ ९७ ॥ ब्रुं हुं फट् चर्चिकापुत्रो ब्रु हुं फट् अविकापुत्रः ॥ ब्रुं हुं फट् वेदमविपुत्रो ब्रुं हुं फट् कौशिकी ॥ १३ ॥
पुत्रः ॥ ९८ ॥ ब्रुं हुं फट् वाराहीपुत्रो ब्रुं हुं फट् माहेश्वरीपुत्रः ॥ ब्रुं हुं फट् भद्रापुत्रो ब्रुं हुं फट् धृतीपुत्रः
॥ ९९ ॥ ब्रुं हुं फट् शांतिपुत्रोथ ब्रुं ह्रीं हुं फट् शिवापुत्रः ॥ ब्रुं हुं फट् क्षमापुत्रो ब्रुं हुं फट् सिद्धिपुत्रकः ॥२००॥
ब्रुं हुं फट् तुष्टिपुत्रो ब्रुं हुं फट् सिद्धिपुत्रकः ॥ ब्रुं हुं फट् रतिपुत्रोथ ब्रुं ह्रीं हुं फट् श्रीपुत्रकः ॥ १ ॥ ब्रुं हुं फट्

दीप्तापुत्रो ब्रुं हुं फट् कांतिपुत्रकः ॥ ब्रुं हुं फट् लक्ष्मीपुत्रो ब्रुं हुं फट् श्रीपुत्रकः ॥ २ ॥
ब्रुं हुं फट् रतिपुत्रोथ ब्रुं हुं फट् ब्रह्मपुत्रकः ॥ ब्रुं हुं फट् कर्दमापुत्रो ब्रुं हुं फट् आर्यापुत्रकः ॥ ३ ॥ ब्रुं हुं फट्
फट् सतीपुत्रोथ ब्रुं हुं फट् रुंथतिपुत्रः ॥ ब्रुं हुं फट् गंगापुत्रोथ ब्रुं हुं फट् गोमतीपुत्रः ॥ ४ ॥ ब्रुं हुं फट्
रेवापुत्रोथ ब्रुं हुं फट् यमुनापुत्रः ॥ ब्रुं हुं फट् भाद्रापुत्रोथ ब्रुं हुं फट् अत्रेयीपुत्रकः ॥ ५ ॥ ब्रुं हुं फट् कौशिकी
पुत्रो ब्रुं हुं फट् भोगवतीसुतः॥ ब्रुं हुं बाहुदापुत्रश्च ब्रुं हुं कर्मनाशापुत्रकः॥६॥ ब्रुं रुं कूष्मांडीपुत्रश्च ब्रुं ब्रुं ह्रीं राक्षसी
सुतः ॥ ब्रुं हुं दानवीपुत्रश्च ब्रुं हुं पिशाचिपुत्रस्तथा ॥ ७ ॥ वह्निगर्भो वह्निनेत्रो वह्नितेजगतीति च ॥ वह्नि
दृष्टिर्वह्निशांतो वह्निरूपश्च वह्निभूः ॥ ८ ॥ वायुगर्भो वायुगतिर्वायुवाहनतत्परः ॥ बाधाकरो बीजरूपो बाधा
काशपरायणः ॥ ९ ॥ वायुविक्रमसंचारी वायुदुर्गतिविक्रमः ॥ वह्निहुं फट् विघ्नेश्वरो वह्निहुं फट् विप्रोत्तमः ॥
॥ १० ॥ बं बं एकदंतभैरवो बं बं विघ्नकृद्भैरवः ॥ वं मोदकभैरवोथ वं प्रमोदभैरवस्तथा ॥ ११ ॥ वं दुर्मुखभैरवो
वं सुमुखभैरवेशः ॥ वं प्रमोदभैरवोथ वं शोनाभैरवस्तथा ॥ १२ ॥ वं उन्मत्तभैरवोथ वं मत्तभैरवस्तथा ॥
वं खरमुखभैरवो वै वं लंबोदरभैरवः ॥ १३ ॥ वं वं अमोदभैरवो वं वं मुण्डभैरवस्तथा ॥ वक्रतुंडभैरवो वं
वं वामदेवभैरवः ॥१४॥ वं दुर्गभैरवश्चैव वं मेघनादभैरवः ॥ वं सेनाभैरवश्चैव वं भक्षप्रियभैरवः ॥ १५ ॥ वं अरुणभै
रवोथ वं श्वेतभैरवस्तथा ॥ वं पांडुभैरवश्चैव वं नीतिभैरवस्तथा ॥ १६ ॥ वं शामभैरवश्चैव वं हरिद्राख्यभैरवः ॥ वं
उच्छिष्टभैरवोथ वं कृष्णभैरवस्तथा ॥१७॥ वैकल्यकलितश्चैव वैकल्यविधिदर्शिनः॥ वैकुंठलोकमंगलो वैकुंठधामना
यकः ॥१८॥ वैकुंठधामसन्मान्यो वैकुंठधामपरायणः ॥ वैणमानससंचारो वैणमानसमोहनः ॥ १९ ॥ वैणसंभागग
मनो वैणकुंडनिमज्जनः ॥ वैणचक्रसमाकीर्णो वैणवीभवनः परः ॥ २० ॥ वैणचक्रो वैणवोथ वैणचक्रनिवारणः ॥
वैणावणो वैणधर्मा वैणकर्मपरायणः ॥ २१ ॥ वैणसंतानसंप्रीतो वैणसंतानदायकः ॥ वैणकर्षणदो वैणतांडवानंद
दायिनः ॥ २२ ॥ वैणगणरतो वैणो वैणमालाविभूषगः ॥ वैणसंलापसंतुष्टो वैणपश्चान्नभोजनः ॥ २३ ॥ वैष्णवो
वैष्णवाचारो वैष्णवाचारतत्परः ॥ वषट्स्वाहास्वरूपोथ नामसहस्रमुत्तमम् ॥ २४ ॥ सारूप्यनामसाहस्रं भैर
वस्य प्रकाशितम् ॥ देवीशत्रुगणाः सर्वे गच्छंति यममंदिरे ॥ २५ ॥ एकरात्रिप्रयोगेण सप्ताहाद्रिपुनाशनम् ॥
ग्रहणे शशिनः स्थित्वा य एकांते महात्मनः ॥ २६ ॥ बिल्वस्य मूले प्रजपेदयुतं श्रद्धया युतः ॥ तस्य शत्रुग
णेन्योन्यं जायते कलहो भृशम् ॥ २७ ॥ श्मशाने तु समागत्य दिक्पालबलिमाहरेत् ॥ तत्कृष्णान्नादिसंमिश्रं
निर्भयः साधकोत्तमः ॥ २८ ॥ भवेयुस्तत्क्षणादेव सिद्धा विद्याश्चतुर्दश ॥ २९ ॥ स पश्येद्देवतां तत्र वरदानकृ
तोद्यमाम् ॥ यद्वदेत्प्रथमं देवी तत्र भूमौ समाहितः ॥ ३० ॥ द्वितीयवाक्योपि तथा यत्नवान्प्रयतो भवेत् ॥
अथ सुश्लक्ष्णया वाचा प्रार्थयेन्मनसः फलम् ॥ ३१ ॥ ततोन्यं परमं वक्ष्ये विधिं लोकैककहेतवे ॥ साधकश्चाति

रमणां वांछयेदपि यां स्त्रियम् ॥ ३२ ॥ स्थित्वा कनकमूलेपि व्याघ्रचर्मणि देशिकः ॥ रक्तांबरपरीधानो रक्त
माल्यानुलेपनः ॥ ३३ ॥ पूजयित्वा महेशानं कनकपुष्पेण वार्चितम् ॥ यन्नाम्ना प्रयतो मन्त्रं प्रजपेच्च विच
क्षणः ॥ ३४ ॥ क्षणार्द्धं कर्षयेन्नारीमुर्वशीमपि मानवः ॥ अनेनैव विधानेन द्रव्यस्याकृष्टिरुत्तमा ॥ ३५ ॥ कुजे
भूम्यां वटस्येह मूले स्थित्वा विचक्षणः ॥ रात्रौ भयचित्तस्तु प्रजपेदयुतं तथा ॥ ३६ ॥ ध्यात्वा देवं वात
रूपं वाचा बन्धनमुत्तमम् ॥ संजाप्याष्टोत्तरशतं यस्मै दद्याजपेच्छतम् ॥ ३७ ॥ स प्राप्नोति पुत्रफलं चिरायुः
सहितं मुदा ॥ वाचास्तंभनकामस्तु हरिद्राफलमिश्रितः ॥ ३८ ॥ एकरात्रौ जपेद्यस्य नाम्ना प्रयतमानसः ॥
तस्य जह्वा क्षणात्स्तंभं मान्यश्चापि बृहस्पतिः ॥ ३९ ॥ क्षणात्स्तंभनकामस्तु सर्वत्र लवणान्वितम् ॥
कृत्वा तु जुहुयाद्धीमान्सर्वालापांस्तु साधकः ॥ ४० ॥ रोगाणां शमने प्रीतिर्होमैक्षुगजीसंयुतम् ॥ जुहुया
द्यस्य नाम्ना तु तस्य नश्यंत्युपद्रवाः ॥ ४१ ॥ एवं विधानेन सुधीः साधयित्वा विचक्षणः ॥ स्तोत्रेदं निर्भयं
कुर्यात्साधयेत्साधकोत्तमः ॥ ४२ ॥ आदौ सुविद्याध्यानं च विनियोगं ततः स्मरेत् ॥ पश्चात्पाठं प्रकुर्वाणो
भुक्तिं मुक्तिं च विंदति ॥ ४३ ॥ संस्थापयेदिष्टमूर्तिं पठेन्नामसहस्रकम् ॥ पूजां कर्तुं महेशानि कलशस्य जलेन
च ॥ ४४ ॥ नाम्नामेतज्जपेद्देवं सर्वाज्ञानविनाशकृत् ॥ अर्कपुष्पसहस्राणि कर्णिकाकुसुमानि वा ॥ ४५ ॥
प्रतिनाम समर्पयेत्कलशस्य जलेन च ॥ सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ॥ ४६ ॥ एकवारं पठेद्रात्रौ
सर्वपापविनाशनम् ॥ द्विवारं पठनादेव सान्निध्यकरणं तथा ॥ ४७ ॥ त्रिवारं च पठेन्नित्यं सर्वग्रहनिवारणम् ॥
वर्षैकेन महादेवि शिवरूपो हि निश्चितम् ॥ ४८ ॥ देयं शाक्ताय शैवाय स्वभक्ताय विशेषतः ॥ आत्मतत्त्वं तु
विज्ञाय कालीभक्तिपराय च ॥४९॥अभक्तेभ्यः कुशिष्येभ्यः कृपणाय शठाय च ॥ नेदं दद्यान्महेशानि ब्रह्महत्या
परो भवेत् ॥ ५० ॥ भैरवानन्दहृदयं भैरवानन्दभैरवम् ॥ हरिः साक्षाद्भवेद्भक्तः भैरवो नात्र संशयः ॥ ५१ ।
स्तवमं बटुकस्येदं यः पठेत्प्रयतो नरः ॥ सर्वसिद्धिमवाप्नोति सत्यमेव न संशयः ॥ ५२ ॥ ज्ञानेन तत्परं साक्षा
द्ध्यानेन च शिवेन च ॥ दत्तात्रेयसमो ज्ञाने गंगेव मलनाशने ॥ ५३ ॥ कामदेव इव स्त्रीणां गंधर्व इव रूपवान् ॥
शत्रुनाशे यमः साक्षाद्धने धनपतिर्यथा ॥ ५४ ॥ स भवेत्साधकः श्रेष्ठः सत्यं परवचोदितम् ॥ य इदं पठते
स्तोत्रं शिवेन सह मोदते ॥ ५५ ॥ ज्ञानधर्मार्थभोगी स्यान्मृते मोक्षपतिर्भवेत् ॥ सत्यंसत्यं महादेवि सत्यंसत्यं
महेश्वरि ॥ ५६ ॥ स्तवस्यास्य प्रभावेन शिवेन सह मोदते ॥ शिवरूपं गुरुं ध्यात्वा गुरुरूपं शिवं स्मरेत् 
॥ ५७ ॥ एवं भूत्वा पठेद्देवि सर्वसिद्धिमवाप्स्यति ॥ ५८ ॥ इति श्री ह० बृ० ध० उपा० स्तबके श्रीब
टुकभैरवोपासनाध्याये भैरवयामलतंत्रे श्रीबकारादिबटुकभैरवसहस्रनामस्तोत्रनिरूपणं नाम प्रकरणं षष्ठम् ॥ ६ ॥
॥ ॥ अथ श्रीबटुकभैरवसहस्रनामस्तोत्रम् ॥ ॥ उक्तं च भैरवतंत्रे ॥ ईश्वर उवाच ॥ देवेशि भक्त

सुलभे देवनायकवंदिते ॥ भक्तानां कार्यसिद्ध्यर्थं निदान ब्रूहि तत्त्वतः ॥ १ ॥ विनैव न्यासजालेन पूजनेन
विना भवेत् ॥ विना कायादिक्लेशेन वित्तव्ययं विनेश्वरि ॥ २ ॥ देव्युवाच ॥ ॐ अस्य श्रीबटुकभैरव
सहस्रनामस्तोत्रमन्त्रस्य ब्रह्मानंदभैरव ऋषिः त्रिष्टुप् छंदः ॥ बटुकभैरवो देवता । बं बीजम् । ह्रीं शक्तिः ।
सर्वाभीष्टसिद्धये जपे विनियोगः ॥ अथ न्यासः ॥ ॐ ह्रां बां अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं बीं तर्जनीभ्यां
नमः ॥ ॐ ह्रूं बूं मध्यमा० ॥ ॐ ह्रैं बै अनामिका० ॥ ॐ ह्रौं बौं कनिष्ठिका० ॥ ॐ ह्रः बः करतलकर
पृष्ठाभ्यां नमः ॥ एवं हृदयादि ॥ अथ ध्यानम् ॥ उद्यद्भास्करसन्निभं त्रिनयनं रक्तांगरागस्रजं स्मेरास्यं
वरदं कपालमभयं शूलं दधानं करैः ॥ नीलग्रीवमुदारकौस्तुभधरं शीतांशुचूडोज्ज्वलं बंधूकारुणवाससं भयहरं
देवं सदा भावयेत् ॥ ३ ॥ ध्यायेन्नीलाद्रिकांतमित्येवं ध्यात्वा ॥ अथ नामानि ॥ ॐ ह्रीं बटुकः कामदो
नाथोऽनाथप्रियप्रभाकरः ॥ भैरवो भीतिहा दर्पः कंदर्पो मीनकेतनः ॥ ४ ॥ रुद्रो बटुकभूतीशो भूतनाथः
प्रजापतिः ॥ दयालुः क्रूर ईशानो जनीशो लोकवल्लभः ॥ ५ ॥ देवो दैत्येश्वरो वीरो वीरवंद्यो दिवाकरः ॥ बलि
प्रियः सुरश्रेष्ठः कनिष्ठो नैष्ठिकः शिशुः ॥ ६ ॥ महाबलो महातेजा वित्तेजो द्युतिवर्धनः ॥ तेजस्वी वीर्यवान्वृद्धो
विवृद्धो भूतनायकः ॥ ७ ॥ बालकः पालकः कामो विकामः काममर्दनः ॥ कालिकारमणः कालीनायकः
कालिकाप्रियः ॥ ८ ॥ कालीशः कालिकाकान्तः कालिकानन्दवर्धनः ॥ कालिकाहृदयज्ञानी कालिकातनयो
नयः ॥ ९ ॥ खगेशः खेचरः खेटो विशिष्टो खेटकप्रियः ॥ कुमारः क्रोधनः कालिप्रियः पर्वतरक्षकः ॥ १० ॥
गणेज्यो गणपो गूढो गूढप्रायो गणेश्वरः ॥ गणनाथो गणश्रेष्ठो गणमुख्यो गणप्रियः ॥ ११ ॥ घोरनादो घन
श्यामो घनस्वामी घनांतकः ॥ १२ ॥ चंपकाभश्चिरंजीवी चारुवेषश्चराचरः ॥ चिंत्योऽचिंत्यगुणो धीमान्सु
चित्तस्थश्चितीश्वरः ॥ १३ ॥ छत्री छत्रपतिश्छत्ता छिन्ननासा मनःप्रियः ॥ छिन्नाभश्छिन्नसंतापश्छद्मीराच्छर्दिनांतकः
॥ १४ ॥ जेता जिष्णुर्जहीशानो जनानंदो जनेश्वरः ॥ जनको जनसंतोषो जयजायविनाशनः ॥ १५ ॥ जालं
धरो जनाराध्यो जनाध्यक्षो जनप्रियः ॥ जीवहा जीवदो जंतुर्जीवनाथो जलेश्वरः ॥ १६ ॥ जयदो जित्वरो
जिह्नो जयश्रीर्जयवर्धनः ॥ जयभूमिर्जयकारो ॥ जयहेतुर्जयेश्वरः ॥ १७ ॥ झंकारकृदनंतात्मा झंकारहेतुरात्मभूः ॥
झञ्योश्वरि हरीभर्त्ता विभर्त्ता भृत्यकेश्वरः ॥ १८ ॥ टीत्कारहृदयेयात्मा टंकेशो ठंकनायकः ॥ ठकारभू
ठरंध्रीशो गिरिपृष्ठकुरः पतिः ॥ १९ ॥ ढुंढिर्ढक्काप्रियः पांथो ढुंढिराजो निरंतकः ॥ ताम्रस्तमीश्वरस्तोता तीर्थ
राजस्तडित्प्रभः ॥ २० ॥ त्रिअक्षत्र्यक्षकस्तंभस्ताक्षकस्तंभटेश्वरः ॥ स्थलस्थः स्थावर स्थाता स्थिरबुद्धिः स्थिरे
द्रियः ॥ २१ ॥ स्थिरज्ञानी स्थिरप्रीतिः स्थिरस्थीतिः स्थिराशयः ॥ दामो दामोदरो दंभो दाडिमीकुसुम
प्रियः ॥ २२ ॥ दारिद्र्यहा दमी दिव्यो दिव्यदेहो दिनप्रभुः ॥ दिनकरो दिवानाथो दिवसेशो दिवाकरः ॥ २३ ॥

दीर्घश्वरो दलज्योतिर्दलेशो दलसुंदरः ॥ दलप्रियो दलाभासो दलपूज्यो दलप्रभुः ॥ २४ ॥ दलकांतिर्दला
कारो दलसेव्यो दलार्चितः ॥ दीर्घबाहुर्दलश्रेष्ठो दललुब्धो दलाकृतिः ॥ २५ ॥ दानवश्यो दयासिंधुर्दयालु
र्दीपवल्लभः ॥ धनेशो धनदो धर्मो धनराजो धनप्रभुः ॥ २६ ॥ धनप्रदो धनाध्यक्षो धनमान्यो धनंजयः ॥
धीवरो धातुको धाता ध्रुवो धूमलवर्धनः ॥ २७ ॥ धनिष्ठो धवलच्छत्री धनकाम्यो धनेश्वरः ॥ धीरो धीर
तरो धेनुर्धीरेशो धरणीप्रभुः ॥ २८ ॥ धराधीशो धरानाथो धरणीनायको धरः ॥ धराकांतो धरापालो
धरणीजनवल्लभः ॥ २९ ॥ धराधरो धरो धृष्टो धृतराष्ट्रो धनीश्वरः ॥ नारदो नीरदो नेता नीतिपूज्यो
नतिप्रियः ॥ ३० ॥ नीतिलभ्योन्नतीशानो नीतिलब्धो व्रतीश्वरः ॥ पार्थिवः पार्थसंपूज्यः पार्थदः
प्रणतः पृथुः ॥ ३१ ॥ पृथिवीशः पृथासूनुः पृथिवीभृत्य ईश्वरः ॥ पुराणः पारदः पांथः पांचालीपावकः
प्रभुः ॥ ३२ ॥ पूर्व सुरपतिः श्रेयान्प्रीतिदः प्रीतिवर्द्धनः ॥ पार्वतीशः परेशानः पार्वतीहृदय
प्रियः ॥ ३३ ॥ पार्वतीरमणः पूतः पवित्रः पापनाशनः ॥ पात्री पत्रालिसंतुष्टः परितुष्टः पुमान्प्रियः
॥ ३४ ॥ पर्वेशः पर्वताधीशः पर्वतो नायकात्मजः ॥ फाल्गुनस्तु फणानाथः फणीशः फणरक्षकः ॥ ३५ ॥
फणीपतिः फणीशानः फणराजः फणाकृतिः ॥ बलभद्रो बली बालो बलधीर्बलवर्द्धनः ॥ ३६ ॥
बलप्राणो बलाधीशो बलिदानप्रियंकरः ॥ बलिराजो बलिप्राणो बलिनाथो बलप्रियः ॥ ३७ ॥ बलीवरश्च
बालेशो बालकप्रियदर्शनः ॥ भद्रो भद्रप्रभो भीमो भीमसेनो भयंकरः ॥ ३८ ॥ भव्यो भव्यप्रियो भूतपतिर्भू
तविनायकः ॥ भूतेशो भूतिदो भर्गो भूतभव्यो भवेश्वरः ॥ ३९ ॥ भवानीशो भवेशानो भवानीनायकोर्भकः ॥
मकारो माधवो मीनो मीनकेतुर्महेश्वरः ॥ ४० ॥ महेशुमर्दनो मंथो मिथुनेशोऽमराधिपः ॥ मरीचिर्मंजुलो
मोहो मोहहा मोहमर्दनः ॥ ४१ ॥ मोहको मोहनो मेधाप्रियो मोहविनायकः ॥ महीपतिर्महीशानो महीराजो
मनोहरः ॥ ४२ ॥ महीश्वरो महीपालो महीनाथो महीप्रियः ॥ महीधरो महादेवो मनुराजो मनुप्रियः ॥ ४३ ॥
मौनी मौनधरो मेघो मंदारो मतिवर्द्धनः ॥ मतिदो मंथरो मन्त्रो मन्त्रीशो मन्त्रनायकः ॥ ४४ ॥ मेधावी
मानदो मानी मानहा मानमर्दनः ॥ मीनगो मकराधीशो मधुरो मणिरंजितः ॥ ४५ ॥ मणिरम्यो मणिभ्राता
मणिमंडनमंडितः ॥ मंत्रपो मंत्रदो मुग्धो मोक्षदो मोक्षवल्लभः ॥४६॥ मल्लो मल्लप्रियो मंचो मल्लको मेलनप्रभुः ॥
मल्लिको मल्लिकागंधी मल्लिकाकुसुमप्रियः ॥ ४७ ॥ मालतीशो मघानाथोऽमोघमूर्तिर्मघेश्वरः ॥ मूलाभो मूलहा
मूलो मूलदो मूलमत्सरः ॥ ४८ ॥ माणिक्यरोचिः संमुग्धो मणिकूटो माणिप्रियः ॥ मुकुंदो मदनो मंदो मंद
वंद्यो मनुप्रभुः ॥ ४९ ॥ मनस्थो मेनकाधीशो मेनकाप्रियदर्शनः ॥ यामो यामो यमी देवो यादवो यदुनायकः ॥
॥ ५० ॥ याचको याज्ञिको यज्ञो यज्ञेशो यज्ञवर्धनः ॥ रमापती रमाधीशो रमेशो रामवल्लभः ॥ ५१ ॥ रमा

पती रमानाथो रमाकांतो रमेश्वरः ॥ रेवतीरमणो रामो रमेशो रामनंदनः ॥ ५२ ॥ रम्यमूर्ती रतीशानो राकाया
नायको रविः ॥ लक्ष्मीधरो ललजिह्वो लक्ष्मीबीजजपे रतः ॥ ५३ ॥ लंपटो लंबराजेशो लंबोदरो लकारभूः ॥
वामनो वल्लभो वंद्यो वनमाली वनेश्वरः ॥ ५४ ॥ वनस्थो वनगो विंध्यो विंध्यराजो वनाह्वयः वनेचरो वना
धीशो वनमालाविभूषणः ॥ ५५ ॥ वेणुप्रियो वनाकारो वनाराध्यो वनप्रभुः ॥ शंभुः शंक संतुष्टः शंबरारिः
शरासनः ॥ ५६ ॥ शबरीप्रणतः शालः शिलीमुखध्वनिप्रियः ॥ शकुलः शल्लकः शीतः शीतरश्मिः सितां
शुकः ॥ ५७ ॥ शीलदः शीकरः शीलः शीलशीली शनैश्वरः ॥ सिद्धः सिद्धिकरः साध्यः सिद्धिभूः सिद्धिभा
वनः ॥ ५८ ॥ सिद्धांतवल्लभः सिन्धुः सिंधुतीरनिषेवितः ॥ सिंधुपतिः सरोधीरः सरसीरुहलोचनः ॥
॥ ५९ ॥ सरित्पतिः सरित्संस्थः सरः सिंधुः सरोवरः ॥ सखा वीरपतिः सूतः सचेताः सत्पतिः सितः ॥ ६० ॥
सिंधुराजः सदाभूतः सदाशिवः सतांपतिः ॥ सदीशः सदनः सूरिः सेव्यमानमतीपतिः ॥ ६१ ॥ सूर्यः सूर्यपतिः
सेव्यः सेवाप्रियः सनातनः ॥ सतीशः सरशीनाथः सतीराजः सतीश्वरः ॥६२॥ सतीप्राणः सतीनाथः सतीसेव्यः
सतीश्वरः ॥ सिद्धिराजः सतीतुष्टः सचिवः सव्यवाहनः ॥६२॥ सतीनायकः संतुष्टः सव्यसाची सुमंतकः ॥ सचि
त्तः सर्वसंतोषी सर्वारामः सुसिद्धिदः ॥ ६३ ॥ सर्वाराध्यः सचिवाख्यः सतीपतिसुसेवितः ॥ सागरः सगर
सार्थः समुद्रः समुद्रप्रियः ॥ ६४ ॥ समुद्रतीरसंतुष्टः समुद्रप्रियदर्शनः ॥ समुद्रीशः सरोनाथः सरसिजविलोचनः
॥ ६६ ॥ सरसीजलदाकारः सरसीजलदार्चितः ॥ समुद्रिकः समुद्रात्मा साध्यमानः सुरेश्वरः । ६७ ॥ सुरसे
व्यः सुरेशानः सुरनाथः सुरार्चितः । सुराध्यक्षः सुराराध्यः सुरवंद्यविशारदः ॥ ६८ ॥ सुरमुख्यः सुरप्रायः सुर
सिंधुनिवासवान् ॥ सुधाप्रियः सुधाधीशः सुधाराध्यः सुधापतिः ॥ ६९ ॥ सुधानाथः सुधासूतः सुधासागरसे
वितः ॥ हाटको हीरको हंता हरिकस्य रुचिः प्रभुः ॥ ७० ॥ हव्यवाहो हरिद्राभो हरिद्वारसमर्दनः ॥ हेतिर्हेतुह
रिंत्राता हरिनाथो हरिप्रियः ॥ ७१ ॥ हरिपूज्यो हरिप्राणो हरहृष्टो हरीन्द्रकः ॥ हरीशो हंतृको हीरो हरिनामप
रायणः ॥ ७२ ॥ हरिसुग्धो हरिरम्यो हरदासो हरीश्वरः ॥ हरो हरिपतिर्हारो रोहिणीचित्तहारकः ॥ ७३ ॥
हरहितो हरप्राणो हरिवाहनशोभनः ॥ हासो हासप्रियो हूहूर्हुतभुग् हुतवाहनः ॥ ७४ ॥ हुताशनो हली हक्को
हालाहलहलायुधः ॥ हलाकारो हलीशानो हलिज्यो हलिप्रियः ॥ ७५ ॥ हरपुत्रो हरोत्साहो हरसूनुर्हरात्मजः ॥
हरवंद्यो हराधीशो हरांतको हराकृतिः ॥ ७६ ॥ हरमान्यो हरांकस्थो हरवैरिविनाशनः ॥ हरशत्रुर्हरावर्षोऽहंका
रो हरिणीप्रियः ॥ ७७ ॥ हाटकेशो हटेशानो हाटकप्रियदर्शनः ॥ हाटको हाटकप्राणो हाटभूषणभूषितः ॥
॥ ७८ ॥ हेतिदो हंतको हंसो हंसगतिर्हराह्वयः ॥ हंसीपतिर्हरोन्मत्तो हंसीशो हरवल्लभः ॥ ७९ ॥ हरपुष्पप्र
भो हंसीप्रियो हंसविलासकः ॥ हरबीजरतो हारी हरितो हरितांपतिः ॥ ८० ॥ हरित्प्रभुर्हरिपालो हरिंतर

नायकः ॥ हरिद्विशो हरित्प्राणो हरिप्रियो प्रियो हितः ॥ ८१ ॥ हेरंबो हुंकृतिक्रुद्धो हेरंबानन्दनो हठी ॥ हेरंबप्राणसंहर्ता हेरंबहृदयप्रियः ॥ ८२ ॥ क्षमापतिः क्षणः क्षांतः क्षुरधारः क्षितीश्वरः ॥ क्षितीशः क्षितितः क्षीणः क्षितिपालः क्षितिप्रभुः ॥ ८३ ॥ क्षितीशानः क्षितिप्राणः क्षितिनायकसत्प्रियः ॥ क्षितिराजः क्षणाधीशः क्षणपतिः क्षणेश्वरः ॥ ८४ ॥ क्षणप्रियः क्षमानाथः क्षणदानायकः प्रियः ॥ क्षणिकः क्षणदाधीशः क्षणदाप्राणदः क्षमी ॥ ८५ ॥ शमः क्षोणिपतिः क्षोभः क्षोभकारी शमाप्रियः ॥ क्षमाशीलः क्षमारूपः क्षमामंडनमंडितः ॥ ८६ ॥ क्षमानाथः क्षमाधारः क्षमाकारी क्षमाकरः ॥ क्षेमः क्षीणरजाः क्षुद्रः क्षुद्रपानविशारदः ॥ ८७ ॥ क्षुद्रेशानः क्षणाकारः क्षीरपानकतत्परः ॥ क्षीरशायी क्षणेशानः क्षोणिभृत्क्षणदोत्सवः ॥ ८८ ॥ क्षेमंकरः क्षमालुब्धः क्षमाशास्त्रविशारदः ॥ क्षमीश्वरः क्षमाकामः क्षमाहृदयमंडनः ॥ ८९ ॥ नीलाद्रिरुचिराशीशो नीलपर्वतसन्निभः ॥ नीलमणिप्रभारम्यः शशिभूषणभूषितः ॥ ९० ॥ शशधरः शरीभूतो मुंडमालाविभूषितः ॥ मुंडस्थो मुण्डसंतुष्टो मुण्डमालाधरोऽनघः ॥ ९१ ॥ दिग्वासा विदिगाकारो दिगंबरवरप्रदः ॥ दिगंबरीश आनन्दो दिगंबरतनूद्भवः ॥ ९२ ॥ पिंगलैकजटो धृष्टो डमरुवादनप्रियः ॥ सृणीकरः सृणीशानः खड्गधृक् खड्गपालकः ॥ ९३ ॥ शूलहस्तो मतंगाभो मातंगोत्सवसुन्दरः ॥ अभयंकर ऊर्वंगो लंकापतिविनाशनः ॥ ९४ ॥ नगाशयो नगेशानो नागमंडनमंडितः ॥ नगाकारो नगाधीशो नगशायी नगप्रियः ॥ ९५ ॥ घटोत्सवो घटाकारो घंटावाद्यविशारदः ॥ कपालपाणिरंबेशः कपालासनसादनः ॥ ९६ ॥ पद्मपाणिकपालश्च त्रिनेत्रो नागवल्लभः ॥ किंकिणीजालसंतुष्टो जलप्रायो जलाकरः ॥ ९७ ॥ अपमृत्युहरो मायामोहमूलविनाशनः ॥ आयुधः कमलानाथः कमलाकांतवल्लभः ॥ ९८ ॥ राज्यदो राजराजेशी राजीवपट्टशोभनः ॥ डाकिनीनायको नित्यो नित्यधर्मपरायणः ॥ ९९ ॥ डाकिनीहृदयज्ञानी डाकिनीदेहनाशकः ॥ डाकिनीप्राणदः शुद्धः श्रद्धेयचरितो विभुः ॥ १०० ॥ हेमप्रभो हिमेशानो हिमानीप्रियदर्शनः ॥ हेमदो मर्मदो नामी नामधेयो नगात्मजः ॥ १०१ ॥ वैकुंठो वासुकीप्राणो वासुकीकंठभूषणः ॥ कुंडलीशो मखध्वंसी मखराजो मखेश्वरः ॥ १०२ ॥ मखाकारो मखाधीशो मखमालाविभूषणः ॥ अंबिकावल्लभो वाणीपतिर्वाणीविशारदः ॥१०३॥ वाणीशो वाचःप्राणश्च वचस्थो वचनप्रियः ॥ वेलाधरो दिशामीशो दिङ्नागो हि दिगीश्वरः ॥ १०४ ॥ दूर्वाप्रियो दुराराध्यो दारिद्र्यभयगंजनः ॥ तर्कस्तर्कप्रियस्तर्क्यो वितर्क्यस्तर्कवल्लभः ॥ १०५ ॥ तर्कसिद्धोतिसिद्धात्मा सिद्धदेहो गुहाशयः ॥ ग्रहगर्भो ग्रहेशानो गंधगंधी विशारदः ॥ १०६ ॥ मंगलो मंगलाकारो मंगलवाद्यवादकः ॥ मंगलीशो विमानस्थो विमानो नैकनायकः ॥ १०७ ॥ बुधेशो विबुधाधीशो बुधवारो बुधाकरः ॥ बुधनाथो बुधप्रीतो बुधवंद्यो बुधाधिपः ॥ १०८ ॥ बुधसिद्धो बुधप्राणो बुधबुद्धो बुधप्रियः ॥ सोम

प्रभो मनःसिद्धो मनोजप्राणनाशनः ॥ १०९ ॥ सोमेशो मशकाकारो सोमपाः सोमनायकः ॥ कामगः कामहा बौद्धः कामनाफलदोधिपः ॥११०॥ त्रिदशो दशरात्रेशो दशाननविनाशनः ॥ लक्ष्मणो लक्ष्यसंभर्त्ता लक्ष्यसंरुयो मनःप्रियः ॥ १११ ॥ विभावसुर्नलेशानो नायको नगजाप्रियः ॥ नलकांतिर्नलोत्साहो नरदेवो नराकृतिः ॥ ॥११२॥ नरपतिर्नरेशानो नारायणनरेश्वरः ॥ अनिलो मारुतो मांसो मांसैकरससेवितः ॥११३॥ मरीचिरमरेशानो मागधो मगधप्रभुः ॥ सुन्दरीसेवकोद्धारी द्वारदेशनिवासनः ॥ ११४ ॥ देवकीगर्भसंजातो देवकीसेवकः कुहूः ॥ बृहस्पतिः कविः शुक्रः शारदासाधकप्रियः ॥११५ ॥ शारदासाधक प्राण॰ शारदासेवकोत्सुकः ॥ शारदासाधकश्रेष्ठो वीतरागो गजप्रभुः ॥ ११६ ॥ मांसप्रियो मधुप्राणो मधुमांसमहोत्सवः ॥ मधुपो मधुपश्रेष्ठो मधुपानसदारतिः ॥ ॥ ११७ ॥ मोदकादानसंप्रीतो मोदकामोदमोदितः ॥ आमोदामोदितो नंदो नंदिकेशो नदेश्वरः॥११८॥ नदीप्रियो नदीनाथो नदीतीररुहस्तपाः ॥ तपनस्तापनस्ताम्रतापहा तापकारकः ॥ ११९ ॥ पतंगो गोमुखो गौरो गोपालो गोपवर्द्धनः ॥ गौपतिर्गोपसंहर्ता गोवृन्दैकप्रियोतिगः ॥ १२० ॥ गर्विष्ठो गुणरम्यश्च गुणसिंधुर्गुरुप्रियः ॥ गुणपूज्यो गुणोपेतो गुणवाद्यो गुणोत्सुकः ॥ १२१ ॥ गुणीशः केवलो गर्भः सुगर्भो गर्भरक्षकः ॥ गांभीर्यधारको धर्ता विधर्ता धर्मपालकः ॥ १२२ ॥ जगदीशो जगन्मित्रो जगत्राता जगत्प्रभुः ॥ जगद्धाता जगद्भोक्ता जगज्जाप्यविनाशनः ॥ १२३ ॥ जगत्कर्ता जगद्धर्ता जगज्जीवनजीवनः ॥ मालतीपुष्पसुप्रीतो मालतीकुसुमोत्सवः ॥ १२४ ॥ मालतीकुसुमाकारो मालतीकुसुमप्रभुः ॥ रसालमंजरीरम्यो रसगंधनिषेवितः ॥ १२५ ॥ रसालमंजरीलुब्धो रसालतरुवल्लभः ॥ रसालतरुवासी वै रसालफलसुन्दरः ॥ १२६ ॥ रसालरससंतुष्टो रसालरसलालसः ॥ केतकीपुष्पसंतुष्टो केतकीगर्भसंभवः ॥ १२७ ॥ केतकीपत्रसंकाशः केतकीप्राणनाशनः ॥ गर्तस्थो गर्तगंभीरो गर्त्तेशो गर्त्तनायकः ॥ १२८ ॥ गर्त्तगेशोतिगर्त्तस्थो गर्त्ततीरनिवासकः ॥ गणसेव्यो गणाध्यक्षो गणराजो गणाह्वयः ॥ १२९ ॥ आनंदभैरवो भीरुभैरवेशो रुरुर्भगः ॥ सुब्रह्मभैरवो वामभैरवो भूतभावनः ॥ १३० ॥ भैरवीतनयो देवीपुत्रः पर्वतसंभवः ॥ नाम्ना येन सहस्रेण स्तुत्वा बटुकभैरवम् ॥ १३१ ॥ लभते ह्यतुलां लक्ष्मीं देवानामपि दुर्लभाम् ॥ उपदेशं गुरोर्लब्ध्वा योगे त्रिसंगली भवेत् ॥ १३२ ॥ अष्टम्यां वा चतुर्दश्यां वासरे भूमिसंभवे ॥ शुक्रे वा रविसंक्रांतौ योगोयमुत्तमः प्रभो ॥ १३३ ॥ तस्मिन्योगे महेशानि सर्वसिद्धिमवाप्नुयात् ॥ लक्षमावर्त्तयेन्मंत्रं मंत्रराजं नगेश्वरि ॥ १३४ ॥ नित्यकर्मसुसिद्ध्यर्थं तत्फलं लभते ध्रुवम् ॥ स्तवमेनं पठेन्मंत्री पाठयन्वा यथाविधि ॥ ॥ १३५ ॥ दुर्लभां लभते सिद्धिं सर्वदेवनमस्कृताम् ॥ न प्रकाश्यं च पुत्रेषु भ्रष्टेषु तु कदाचन ॥ १३६ ॥ अन्यथा सिद्धिरोधः स्याद्दातुलो ना भवेत्प्रियः ॥ स्तवस्यास्य प्रसादेन देवनायकवत्प्रियः॥१३७॥संग्रामे विजयेच्छत्रून्मातंगानिव केसरी ॥ राजानं वशयेत्सद्यो देवानपि वशं नयेत् ॥ १३८ ॥ किं वा परं फलं नाथ स्तवराजस्य

कथ्यताम् ॥ यद्यन्मनसि संकल्प्य स्तवमेनमुदीरयन् ॥ १३९ ॥ तत्तदाप्नोति देवेशं बटुकस्य प्रसादतः ॥ आपदां हि विनाशाय कारणं कांत दुर्लभम् ॥१४०॥ देवासुररणे घोरं देवानामुपकारकम्॥प्रकाशितं मया नाथ तंत्रे भैरवदीपके॥१४१॥अपुत्रो लभते पुत्रं षण्मासान्निरतो नरः ॥ पठित्वा पाठयित्वाऽपि स्तवराजमनुत्तमम् ॥ १४२ ॥ दरिद्रो लभते लक्ष्मीमीप्सितामपि निश्चलाम् ॥ कन्यार्थी लभते कन्यां सर्वरूपसमन्विताम् ॥ १४३ ॥ प्रदोषे बलिदाने च वशयेदखिलं जगत् ॥ वटे वा बिल्वमूले वा रंभायां विपिनेपि वा ॥ १४४ ॥ जपेत्सततमालक्षं मन्त्र राजस्य सिद्धये ॥ वर्णलक्षं जपेद्वापि दिङ्मात्रं हि प्रदर्शितम् ॥ १४५ ॥ पूजयेत्तु तिलैर्माषैर्दुग्धैर्मांसैर्झषैस्तथा ॥ घृतपक्वान्नतो वापि जेमनै रससंकुलैः ॥ १४६ ॥ पूजयेद्धारयेद्वापि स्तवमेनं सुसाधकः ॥ पठेद्वा पाठयेद्वापि यथाविधि सुरप्रिये ॥ १४७ ॥ शत्रुतो न भयं तस्य नाग्निचौराद्भवत्रजम् ॥ ज्वरादिसंभवं वापि सत्यं सत्यं महेश्वरि ॥१४८ ॥ भैरवाराधनाशक्तो यो भवेत्साधकः प्रभो ॥ सदाशिवः स विज्ञेयो भैरवेणेति भाषितम् ॥ १४९ ॥ श्रीमद्भैरवराजसेवनविधौ वैय्यग्रमासेदुषः पुंसः पञ्चविधा भवंति नवधा ह्यष्टौ तथा सिद्धयः ॥ क्षोणीपालकिरीट कोटिमणिरुन्मालाभरैर्भूयशो मौग्ध्यं पादपयोजयोर्विजयते मूर्ध्नि प्रभोश्छत्रताम् ॥ १५० ॥ इति श्री ह. बृ. ध. उपा स्तबके श्रीबटुकभैरवोपासनाध्याये श्रीभैरवतंत्रोक्तश्रीबटुकभैरवसहस्रनामस्तोत्रनिरूपणं नाम प्रकरणं सप्तमम् ॥ ७ ॥ अथ तृतीयं श्रीबटुकभैरवसहस्रनामस्तोत्रम् ॥ उक्तं च रुद्रयामले अशीत्यंके ॐ अस्य श्रीबटुकभैरवसहस्रनामात्मकस्तोत्रस्य दुर्वासा ऋषिः । अनुष्टुप् छंदः । भैरवो बटुकनाथो देवता । मम सर्वकार्यसिद्ध्यर्थं सर्वशत्रुनिवारणार्थं बटुकसहस्रनामपाठमहं करिष्ये ॥ महाकालोस्य ऋषिरिति रुद्रजापे ॥ दत्तात्रेय ऋषिरिति ब्रह्मजापे ॥ गौतम ऋषिरिति गौतमीमंत्रे ॥ रावणोस्य ऋषिरिति भैरवीतंत्रे ॥ हनुमान् ऋषिरिति रवतंत्रे ॥ निर्गुणो बटुकः सनकादयो ऋषय इति मोक्षपरत्वे ॥ महाविष्णुश्रीकृष्णऋषिरिति विष्णुयामले ॥ एवं कार्यपरत्वे यथारुचिपाठे ऋषिस्मरणं कृत्वा स्तोत्रं पठेत् ॥ ॐ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमो भद्रस्वरूपाय जगदाद्य नमो नमः ॥ १ ॥ नमः कल्पस्वरूपाय विकल्पाय नमोनमः ॥ नमः शुद्ध स्वरूपाय सुप्रकाशाय ते नमः ॥ २ ॥ नमः कंकालरूपाय कालरूपी नमोस्तु ते ॥ नमस्त्र्यंबकरूपाय महाकालाय ते नमः ॥ ३ ॥ नमः संसारसाराय शारदाय नमोनमः ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥४॥ नमः क्षेत्रनिवासाय क्षेत्रपालाय ते नम ॥ क्षेत्राक्षेत्रस्वरूपाय क्षेत्रकर्त्रे नमोनमः ॥ ५ ॥ नमो नागविनाशाय भैरवाय नमो नमः ॥ नमो मातंगरूपाय भाररूपी नमोस्तु ते ॥ ६ ॥ नमः सिद्धस्वरूपाय सिद्धिदाय नमोनमः ॥ नमो बिंदु स्वरूपाय बिंदुसिंधुप्रकाशिने ॥ ७ ॥ नमो मंगलरूपाय मालवाय नमोनमः ॥ नमः संकष्टनाशाय शंकराय नमोनमः ॥ ८ ॥ नमो धर्मस्वरूपाय धर्मदाय नमोनमः ॥ नमोनंतस्वरूपाय एकरूप नमोस्तु ते ॥ ९ ॥

नमो वृद्धिस्वरूपाय वृद्धिकार नमोस्तु ते ॥ नमो मोहनरूपाय मोक्षरूपाय ते नमः ॥ १० ॥ नमो जलद रूपाय शामरूप नमोस्तु ते ॥ नम स्थूलस्वरूपाय शुद्धरूपाय ते नमः ॥ ११ ॥ नमो नीलस्वरूपाय रग रूपाय ते नमः ॥ नमो मंडलरूपाय मंडलाय नमोनमः ॥ १२ ॥ नमो रुद्रस्वरूपाय रुद्रनाथाय ते नमः ॥ नमो ब्रह्मस्वरूपाय ब्रह्मवक्रे नमोनमः ॥ १३ ॥ नमस्त्रिशूलधराय धराधारिन्नमोस्तु ते ॥ नमः संसारबीजाय विरूपाय नमोनमः ॥ १४ ॥ नमो विमलरूपाय भैरवाय नमोनमः ॥ नमो जंगमरूपाय जलजाय नमोनमः ॥ ॥ १५ ॥ नमः कालस्वरूपाय कालरुद्राय ते नमः ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ १६ ॥ नमः शत्रुवि नाशाय भीषणाय नमोनमः ॥ नमः शांताय दांताय भ्रमरूप नमोस्तु ते ॥ १७ ॥ न्यायगम्याय शुद्धाय योगिध्येयाय ते नमः ॥ नमः कमलकांताय कालवृद्धाय ते नमः ॥ १८ ॥ नमो ज्योतिस्वरूपाय सुप्रका शाय ते नमः ॥ नमः कल्पस्वरूपाय भैरवाय नमोनमः ॥ १९ ॥ नमो जयस्वरूपाय जगज्जाड्यनिवारिणे ॥ महाभूताय भूताय भूतानां पतये नमः ॥ २० ॥ नमो नंदाय वृंदाय वादिने ब्रह्मवादिने ॥ नमो वादस्वरूपाय न्यायगम्याय ते नमः ॥ २१ ॥ नमो भवस्वरूपाय मायानिर्माणरूपिणे ॥ विश्ववंद्याय वंद्याय नमो विश्वंभराय ते ॥ २२ ॥ नमो नेत्रस्वरूपाय नेत्ररूपिन्नमोस्तु ते ॥ नमो वरुणरूपाय भैरवाय नमोनमः ॥ २३ ॥ नमो यमस्वरूपाय वृद्धरूपाय ते नमः ॥ नमः कुबेररूपाय कालनाथाय ते नमः ॥ २४ ॥ नम ईशानरूपाय अग्निरूपाय ते नमः ॥ नमो वायुस्वरूपाय विश्वरूपाय ते नमः ॥ २५ ॥ नमः प्राणस्वरू पाय प्राणाधिपतये नमः ॥ नमः संहाररूपाय पालकाय नमोनमः ॥ २६ ॥ नमश्चंद्रस्वरूपाय चंडरूपाय ते नमः ॥ नमो मंदरवासाय वासिने सर्वयोगिनाम् ॥ २७ ॥ योगिगम्याय योग्याय योगिनां पतये नमः ॥ नमो जंगमवासाय वामदेवाय ते नमः ॥२८॥ नमः शत्रुविनाशाय नीलकंठाय ते नमः ॥ नमो भक्तिविनोदाय दुर्भगाय नमोनमः ॥ २९ ॥ नमो मान्यस्वरूपाय मानदाय नमोनमः ॥ नमो भूतिविभूषाय भूषिताय नमोनमः ॥ ॥ ३० ॥ नमो रजस्वरूपाय सात्त्विकाय नमोनमः ॥ नमस्तामसरूपाय तारणाय नमोनमः ॥ ३१ ॥ नमो गंगा विनोदाय जटासंधारिणे नमः ॥ नमो भैरवरूपाय भीषणाय नमोनमः ॥ ३२ ॥ नमः संग्रामरूपाय संग्रामंज यदायिने ॥ संग्रामसाररूपाय यावनाय नमोनमः ॥ ३३ ॥ नमोवृद्धिस्वरूपाय वृद्धिदाय नमोनमः ॥ नम त्रिशूलहस्ताय शूलसंहारिणे नमः ॥ ३४ ॥ नमो द्वंद्वस्वरूपाय रूपदाय नमोनमः ॥ नमः शत्रुविनाशाय शत्रुबुद्धिविनाशिने ॥ ३५ ॥ महाकालाय कालाय कालनाथाय ते नमः ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ ॥ ३६ ॥ नमः शंभुस्वरूपाय शंभुरूपिन्नमोऽस्तु ते ॥ नमः कमलहस्ताय डमरुहस्ताय ते नमः ॥ ३७ ॥ नमः कुक्कुरवाहाय वहनाय नमोनमः ॥ नमो विमलनेत्राय त्रिनेत्राय नमो नमः ॥ ३८ ॥ नमः संसाररूपाय सारमेयाय

वाहिने ॥ संसारज्ञानरूपाय ज्ञाननाथाय ते नमः ॥ ३९ ॥ नमो मंगलरूपाय मंगलाय नमोनमः ॥ नमो न्याय विशालाय मंत्ररूपाय ते नमः ॥ ४० ॥ नमो यन्त्रस्वरूपाय यन्त्रधारिन्नमोऽस्तु ते ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ ४१ ॥ नमः कलंकरूपाय कलंकाय नमोनमः ॥ नमः संसारपाराय भैरवाय नमोनमः ॥ ॥ ४२ ॥ रुण्डमालाविभूषाय भीषणाय नमोनमः ॥ नमो दुःखनिवाराय विहाराय नमोनमः ॥ ४३ ॥ नमो दण्डस्वरूपाय क्षणरूपाय ते नमः ॥ नमो मुहूर्तरूपाय सर्वरूपाय ते नमः ॥ ४४ ॥ नमो मोदस्वरूपाय श्रोण रूपाय ते नमः ॥ नमो नक्षत्ररूपाय क्षेत्ररूपाय ते नमः ॥ ४५ ॥ नमो विष्णुस्वरूपाय बिंदुरूपाय ते नमः ॥ नमो ब्रह्मस्वरूपाय ब्रह्मचारिन्नमोऽस्तु ते ॥ ४६ ॥ नमः कन्थानिवासाय पटवासाय ते नमः ॥ नमो ज्वलनरूपाय ज्वलनाय नमोनमः ॥ ४७ ॥ नमो बटुकरूपाय धूर्तरूपाय ते नमः ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ ४८ ॥ नमो वैद्यस्वरूपाय वैद्यरूपिन्नमोस्तु ते ॥ नम औषधरूपाय औषधाय नमोनमः ॥ ४९ ॥ नमो व्याधिनिवाराय व्याधिरूपिन्नमोनमः ॥ नमो ज्वरनिवाराय ज्वररूपाय ते नमः ॥ ५० ॥ नमो रुद्रस्वरूपाय रुद्राणां पतये नमः ॥ विरूपाक्षाय देवाय भैरवाय नमोनमः ॥ ५१ ॥ नमो ग्रहस्वरूपाय ग्रहाणां पतये नमः ॥ नमः पवित्रधाराय परशुधाराय ते नमः॥५२॥ यज्ञोपवीतिदेवाय देवदेव नमोऽस्तु ते ॥ नमो यज्ञस्वरूपाय यज्ञानां फलदायिने ॥ ५३ ॥ नमो रणप्रतापाय तापनाय नमोनमः ॥ नमो गणेशरूपाय गणरूपाय ते नमः ॥ ५४ ॥ नमो रश्मिस्वरूपाय रश्मिरूपाय ते नमः ॥ नमो मलयरूपाय रश्मिरूपाय ते नमः ॥ ५५ ॥ नमोविभक्तिरूपाय विमलाय नमोनमः ॥ नमो मधुररूपाय माधिपूर्णकलापिने ॥५६॥ कालेश्वराय कालाय कालनाथाय ते नमः ॥ नमो विश्वप्रकाशाय भैरवाय नमोनमः ॥५७॥ नमो योनिस्वरूपाय भ्रातृरूपाय ते नमः ॥ नमो भगिनिरूपाय भैरवाय नमोनमः ५८॥ नमो वृषस्वरूपाय कर्मरूपाय ते नमः ॥ नमो वेदांतवेद्याय वेदसिद्धांतसारिणे ॥५९॥ नमः शाखाप्रकाशाय पुरुषाय नमोनमः ॥ नमः प्रकृतिरूपाय भैरवाय नमोनमः ॥ ६० ॥ नमो विश्वस्वरूपाय शिवरूपाय ते नमः ॥ नमो ज्योतिस्स्वरूपाय निर्गुणाय नमोनमः ॥ ६१ ॥ निरंजनाय शांताय निर्विकाराय ते नमः ॥ निर्ममाय विमोहाय विश्वनाथाय ते नमः ॥६२॥नमः कंठप्रकाशाय शत्रुनाशाय ते नमः ॥ नमो आशाप्रकाशाय आशापूरकृते नमः ॥६३॥ नमो मत्स्यस्वरूपाय योगरूपाय ते नमः ॥ नमो वाराहरूपाय वामनाय नमो नमः ॥ ६४ ॥ नमो आनंदरूपाय आनंदाय नमोनमः ॥ नमः अनर्घकेशाय ज्वलत्केशाय ते नमः ॥ ६५ ॥ नमः पापविमोक्षाय मोक्षदाय नमोनमः ॥ नमः कैलासनाथाय कालनाथाय ते नमः ॥ ६६ ॥ नमोबिंदुदबिंदाय बिंदुभाय नमोनमः ॥ नमः प्रणवरूपाय भैरवाय नमोनमः ॥ ६७ ॥ नमो मेरुनिवासाय भक्तवासाय ते नमः ॥ नमो मेरुस्वरूपाय भैरवाय नमोनमः ॥ ६८ ॥ नमो भद्रस्वरूपायभद्ररूपाय ते नमः ॥ नमो योगिस्वरूपाय योगिनां

पतये नमः॥६९॥नमो मैत्रस्वरूपाय मित्ररूपाय ते नमः ॥ नमो ब्रह्मनिवासाय काशीनाथाय ते नमः ॥७०॥ नमो ब्रह्मांडवासाय ब्रह्मवासाय ते नमः ॥ नमो मातंगवासाय सूक्ष्मवासाय ते नमः ॥ ७१ ॥ नमो मातृनिवासाय भ्रातृवासाय ते नमः ॥ नमो जगन्निवासाय जलावासाय ते नमः ॥ ७२ ॥ नमः कौलनिवासाय नेत्रवासाय ते नमः ॥ नमो भैरववासाय भैरवाय नमोनमः ॥ ७३ ॥ नमः समुद्रवासाय वह्निवासाय ते नमः ॥ नमश्चंद्र निवासाय चंद्रावासाय ते नमः ॥ ७४ ॥ नमः कलिंगवासाय कलिंगाय नमोनमः ॥ नम उत्कलवासाय महें द्रवासाय ते नमः ॥ ७५ ॥ नमः कर्पूरवासाय सिद्धिवासाय ते नमः ॥ नमः सुन्दरवासाय भैरवाय नमोनमः ॥ ७६ ॥ नम आकाशवासाय वासिने सर्वयोगिनाम् ॥ नमो ब्राह्मणवासाय शूद्रवासाय ते नमः ।। ७७ ॥ नमः क्षत्रियवासाय शूद्रवासाय ते नमः ॥ नमः पक्षिनिवासाय भैरवाय नमोनमः ॥ ७८ ॥ नमः पातालमूलाय मूलावासाय ते नमः ॥ नमो रसातलवासाय सर्वपातालवासिने ॥ ७९ ॥ नमः कंकालवासाय कंकवासाय ते नमः ॥ नमो मंत्रनिवासाय भैरवाय नमोनमः ॥ ८० ॥ नमोऽहंकाररूपाय रजोरूपाय ते नमः ॥ नमः सत्त्व निवासाय भैरवाय नमोनमः ॥ ८१ ॥ नमो नलिनरूपाय नलिनांगप्रकाशिने ॥ नमः सूर्यस्वरूपाय भैर वाय नमोनमः ॥ ८२ ॥ नमो दुष्टनिवासाय साधूपायनरूपिणे ॥ नमो नम्रस्वरूपाय स्तंभनाय नमोनमः ॥ ८३ ॥ पंचयोनिप्रकाशाय चतुर्योनिप्रकाशिने ॥ नवयोनिप्रकाशाय भैरवाय नमोनमः ॥ ८४ ॥ नमः षोडशरूपाय नमः षोडशधारिणे ॥ चतुःषष्टिप्रकाशाय भैरवाय नमोनमः ॥ ८५ ॥ नमो बिंदुप्रकाशाय सुप्रकाशाय ते नमः ॥ नमो गणस्वरूपाय सुखरूप नमोऽस्तु ते ॥ ८६ ॥ नमो अंबररूपाय भैरवाय नमोनमः ॥ नमो नानास्वरूपाय सुखरूप नमोऽस्तु ते ॥ ८७ ॥ नमो दुर्गस्वरूपाय दुःखहंत्रे नमोऽस्तु ते ॥ नमो विशुद्धदेहाय दिव्यदेहाय ते नमः ॥ ८८ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमः प्रेतनिवासाय पिशाचाय नमोनमः ।८९॥ नमो निशाप्रकाशाय निशारूप नमोऽस्तु ते ॥ नमः सोमार्धरामाय धराधीशाय ते नमः ॥ ९० ॥ नमः संसारभागाय भारकाय नमोनमः ॥ नमो देहस्वरूपाय अदेहायः नमोनमः ॥ ९१ ॥ देवदेहाय देवाय भैरवाय नमोनमः ॥ विश्वेश्वराय विश्वाय विश्वधारिन्नमोऽस्तु ते ॥ ९२ ॥ स्वप्रकाशप्रकाशाय भैरवाय नमोनमः ॥ स्थितिरूपाय स्थित्याय स्थितीनां पतये नमः ॥ ९३ ॥ सुस्थिराय सुकेशाय केशवाय नमोनमः ॥ स्थविष्ठाय गरिष्ठाय प्रेष्ठाय परमात्मने ॥ ९४ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमः पारदरूपाय पवित्राय नमोनमः ॥ ९५ ॥ नमो वेधकरूपाय अनिंदाय नमोनमः ॥ नमः शब्दस्वरूपाय शब्दातीताय ते नमः ॥ ९६ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमोनिंदास्वरूपाय अनिंदाय नमोनमः ॥ ९७ ॥ नमो विशदरूपाय भैरवाय नमोनमः ॥ नमः शरण्यशरण शरण्यानां सुखाय ते ॥ ९८ ॥ नमः शरण्यरक्षाय भैरवाय नमोनमः ॥

नमः स्वाहास्वरूपाय स्वधारूपाय ते नमः ॥ ९९ ॥ नमो वौषट्स्वरूपाय भैरवाय नमोनमः ॥ अक्षराय नमस्तुभ्यं त्रिधामात्रास्वरूपिणे ॥ १०० ॥ नमोऽक्षराय शुद्धाय भैरवाय नमोनमः ॥ अर्धमात्राय पूर्णाय पूर्णाय ते नमोनमः ॥ १ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमोऽष्टचक्ररूपाय ब्रह्मरूपाय ते नमः ॥ २ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमः सृणिस्वरूपाय सृष्टिकर्त्रे महात्मने ॥ ३ ॥ नमः पाल्यस्वरूपाय भैरवाय नमोनमः ॥ सनातनाय नित्याय निर्गुणाय गुणाय ते ॥ ४ ॥ नमः सिद्धाय शांताय भैरवाय नमोनमः ॥ नमो धारास्यरूपाय खड्गहस्ताय ते नमः ॥ ५ ॥ नमस्त्रिशूलहस्ताय भैरवाय नमोनमः ॥ नमः कुंडलवर्णाय शवमुंडविभूषिणे ॥ ६ ॥ महाक्रुद्धाय चंडाय भैरवाय नमोनमः ॥ नमो वासुकिभूषाय सर्वभूषाय ते नमः ॥ ७ ॥ नमः कपालहस्ताय भैरवाय नमोनमः ॥ पानपात्रप्रमत्ताय मत्तरूपाय ते नमः ॥ ८ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ मध्वाकारसुपर्णाय माधवाय नमोनमः ॥९॥ नमो मांगल्यरूपाय भैरवाय नमोनमः ॥ नमः कुमाररूपाय स्त्रीशूर्पाय नमोनमः ॥ १० ॥ नमो गंधस्वरूपाय भैरवाय नमोनमः ॥ नमो दुर्गंधरूपाय सुगंधाय नमोनमः ॥ ॥ ११ ॥ नमः पुष्पस्वरूपाय पुष्पभूषण ते नमः ॥ नमः पुष्पप्रकाशाय भैरवाय नमोनमः ॥ १२ ॥ नमः पुष्पविनोदाय पुष्पपूजाय ते नमः ॥ नमो भक्तिनिवासाय भक्तदुःखनिवारिणे ॥ १३ ॥ भक्तप्रियाय शांताय भैरवाय नमोनमः ॥ नमो भक्तस्वरूपाय रूपदाय नमोनमः ॥ १४ ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥ नमो वासाय भद्राय वीरभद्राय ते नमः ॥ १५ ॥ नमः संग्रामसाराय भैरवाय नमोनमः ॥ नमः खट्वांगहस्ताय कालहस्ताय ते नमः ॥१६॥ नमोऽघोराय घोराय घोराघोरस्वरूपिणे ॥ घोरघर्माय घोराय भैरवाय नमोनमः ॥१७॥ घोरत्रिशूलहस्ताय घोरपानाय ते नमः॥घोररूपाय नीलाय भैरवाय नमोनमः ॥१८॥ घोरवाहनगम्याय अगम्याय नमोनमः ॥ घोरब्रह्मस्वरूपाय भैरवाय नमोनमः ॥ १९ ॥ घोरशब्दाय घोराय घोरदेहाय ते नमः ॥ घोरद्रव्याय घोराय भैरवाय नमोनमः ॥२०॥ घोरसंगाय सिंहाय सिद्धसिंहाय ते नमः ॥ नमः प्रचंडसिंहाय सिंहरूपाय ते नमः ॥ २१ ॥ नमः सिंहप्रकाशाय सुप्रकाशाय ते नमः॥नमो विजयरूपाय जगदाद्य नमोनमः ॥ २२ ॥ नमो भार्गवरूपाय गर्भरूपाय ते नमः॥नमो भैरवरूपाय भैरवाय नमोनमः ॥२३॥ नमो मेध्याय शुद्धाय मायाधीशाय ते नमः ॥ नमो मेघप्रकाशाय भैरवाय नमोनमः ॥२४॥ दुर्ज्ञेयाय दुस्तराय दुर्लभाय दुरात्मने॥भक्तिलभ्याय भव्याय भाविताय नमोनमः ॥२५॥ नमो गौरवरूपाय गौरवाय नमोनमः ॥ नमो भैरवरूपाय भैरवाय नमोनमः ॥२६॥ नमो विघ्ननिवाराय विघ्नराशिनमोऽस्तु ते॥नमो विघ्नविद्रावणाय भैरवाय नमोनमः ॥ २७ ॥ नमो किंशुकरूपाय रजोरूपाय ते नमः ॥ नमो नीलस्वरूपाय भैरवाय नमोनमः ॥ २८ ॥ नमोगणस्वरूपाय गणनाथाय ते नमः ॥ नमो विश्वप्रकाशाय भैरवाय नमोनमः ॥२९॥ नमो योगिप्रकाशाय योगिगम्याय ते नमः ॥ नमो हेरंबरूपाय भैरवाय नमोनमः ॥ ३० ॥

नमस्त्रिधास्वरूपाय रूपदाय नमोनमः ॥ नमः स्वरस्वरूपाय भैरवाय नमोनमः ॥ ३१ ॥ नमः सरस्वतीरूप
बुद्धिरूपाय ते नमः ॥ नमो वंद्यस्वरूपाय भैरवाय नमोनमः ॥३२॥ नमस्त्रिविक्रमरूपाय त्रिस्वरूपाय ते नमः ॥ नमः
शशांकरूपाय भैरवाय नमोनमः ॥ ३३ ॥ नमो व्यापकरूपाय व्याप्यरूपाय ते नमः ॥ नमो भैरवरूपाय भैरवाय
नमोनमः ॥ ३४ ॥ नमो विशदरूपाय भैरवाय नमोनमः॥नमः सत्त्वस्वरूपाय भैरवाय नमोनमः ॥ ३५ ॥ नमः सूक्त
स्वरूपाय शिवदाय नमोनमः ॥ नमो गंगास्वरूपाय यमुनारूपिणे नमः ॥ ३६ ॥ नमो गौरीस्वरूपाय भैरवाय
नमोनमः ॥ नमो दुःखविनाशाय दुःखमोक्षणरूपिणे ॥ ३७ ॥ महाचलाय वैद्याय भैरवाय नमोनमः ॥ नमो
नंदस्वरूपाय भैरवाय नमोनमः ॥ ३८ ॥ नमो नन्दिस्वरूपाय स्थिररूपाय ते नमः ॥ नमः केलिस्वरूपाय
भैरवाय नमोनमः ॥३९॥ नमः क्षेत्रनिवासाय वासिने ब्रह्मवादिने ॥ नमः शांताय शुद्धाय भैरवाय नमोनमः ॥४०॥
नमो नर्मदरूपाय जलरूपाय ते नमः ॥ नमो विश्वविनोदाय जयदाय नमोनमः ॥ ४१ ॥ नमो महेन्द्ररूपाय
महनीयाय ते नमः ॥ नमः संसृतिरूपाय शरणीयाय ते नमः ॥ ४२ ॥ नमस्त्रिबन्धुवासाय बालकाय नमो
नमः ॥ नमः संसारसाराय सरसां पतये नमः ॥ ४३ ॥ नमस्तेजस्स्वरूपाय भैरवाय नमोनमः ॥ नमः कारु
ण्यरूपाय भैरवाय नमोनमः ॥ ४४ ॥ नमो गोकर्णरूपाय ब्रह्मवर्णाय ते नमः ॥ नमः शंकरवर्णाय हस्तिकर्णा
य ते नमः ॥ ४५ ॥ नमो विष्टरकर्णाय यज्ञकर्णाय ते नमः ॥ नमः शंबुककर्णाय भैरवाय नमोनमः ॥ ४६ ॥
नमो दिव्यस्तुकर्णाय कालकर्णाय ते नमः ॥ नमो भयदकर्णाय भैरवाय नमोनमः ॥ ४७ ॥ नमः आकाशवर्णाय
कालकर्णाय ते नमः ॥ नमो दिग्रूपकर्णाय भैरवाय नमोनमः ॥ ४८ ॥ नमो विशुद्धकर्णाय विमलाय
नमोनमः ॥ नमः सहस्रकर्णाय भैरवाय नमोनमः ॥ ४९ ॥ नमो नेत्रप्रकाशाय सुनेत्राय नमोनमः ॥ नमो
वरदनेत्राय जयनेत्राय ते नमः ॥ ५० ॥ नमो विमलनेत्राय योगिनेत्राय ते नमः ॥ नमः सहस्रनेत्राय
भैरवाय नमोनमः ॥ ५१ ॥ नमः कलिंदरूपाय कलिंदाय नमोनमः ॥ नमो ज्योतिःस्वरूपाय ज्योतिषाय
नमोनमः ॥ ५२ ॥ नमस्तारप्रकाशायताररूपिन् नमोऽस्तु ते ॥ नमो नक्षत्रनेत्राय भैरवाय नमोनमः ॥ ५३ ॥
नमश्चन्द्रप्रकाशाय चन्द्ररूप नमोऽस्तु ते ॥ नमो रश्मिस्वरूपाय भैरवाय नमोनमः ॥ ५४ ॥ नम आनन्दरूपाय
जगदानन्दरूपिणे ॥ नमो द्रविडरूपाय भैरवाय नमोनमः ॥ ५५ ॥ नमः शंखनिवासाय शंकराय नमोनमः ॥
नमो मुद्राप्रकाशाय भैरवाय नमोनमः ॥५६॥ नमो न्यासस्वरूपाय न्यासरूप नमोऽस्तु ते ॥ नमो बिन्दुस्वरूपाय
भैरवाय नमोनमः ॥ ५७ ॥ नमो विसर्गरूपाय प्रणवरूपाय ते नमः ॥ नमो मंत्रप्रकाशाय भैरवाय नमोनमः ॥
॥ ५८ ॥ नमो जंबुकरूपाय जंगमाय नमोनमः ॥ नमो गरुडरूपाय भैरवाय नमोनमः ॥ ५९ ॥ नमो
लंबुकरूपाय लंबिकाय नमोनमः ॥ नमो लक्ष्मीस्वरूपाय भैरवाय नमोनमः ॥ ६० ॥ नमो वीरस्वरूपाय

वीरणाय नमोनमः ॥ नमः प्रचंडरूपाय भैरवाय नमोनमः ॥ ६१ ॥ नमो डंबरस्वरूपाय डमरुधारिन्नमोऽस्तु ते ॥ नमः कलंकनाशाय कालनाथाय ते नमः ॥ ६२ ॥ नमः ऋद्धिप्रकाशाय सिद्धिदाय नमोनमः ॥ नमः सिद्धस्वरूपाय भैरवाय नमोनमः ॥ ६३ ॥ नमो धर्मप्रकाशाय धर्मनाथाय ते नमः ॥ धर्माय धर्मराजाय भैरवाय नमोनमः ॥ ६४ ॥ नमो धर्माधिपतये धर्मध्येयाय ते नमः ॥ नमो धर्मार्थसिद्धाय भैरवाय नमोनमः ॥ ६५ ॥ नमो विरजरूपाय रूपारूपप्रकाशिने ॥ नमो राजप्रकाशाय भैरवाय नमोनमः ॥ ६६ ॥ नमः प्रतापसिंहाय प्रतापाय नमोनमः ॥ नमः कोटिप्रतापाय भैरवाय नमोनमः ॥ ६७ ॥ नमः सहस्ररूपाय कोटिरूपाय ते नमः ॥ नम आनन्दरूपाय भैरवाय नमोनमः ॥ ६८ ॥ नमः संहारबन्धाय बन्धकाय नमो नमः ॥ नमो विमोक्षरूपाय मोक्षदाय नमोनमः ॥ ६९ ॥ नमो विष्णुस्वरूपाय व्यापकाय नमोनमः ॥ नमो मांगल्यनाथाय शिवनाथाय ते नमः ॥ ७० ॥ नमो व्यालाय व्याघ्राय व्याघ्ररूप नमोऽस्तु ते ॥ नमो व्यालावभूषाय भैरवाय नमोनमः ॥ ७१ ॥ नमो विद्याप्रकाशाय विद्यानां पतये नमः ॥ नमो योगिस्वरूपाय क्रूररूपाय ते नमः ॥ ७२ ॥ नमः संहाररूपाय शत्रुनाशाय ते नमः ॥ नमः पालकरूपाय भैरवाय नमोनमः ॥ ७३ ॥ नमः कारुण्यदेवाय देवदेवाय ते नमः ॥ नमो विश्वविलासाय भैरवाय नमोनमः ॥ ७४ ॥ नमोनमः प्रकाशाय काशीवासिन्नमोऽस्तु ते ॥ नमो भैरवक्षेत्राय क्षेत्रपालाय ते नमः ॥ ७५ ॥ नमो भद्रस्वरूपाय भद्रकाय नमोनमः ॥ नमो भद्राधिपतये भयहंत्रे नमोस्तु ते ॥ ७६ ॥ नमो मायाविनोदाय मायिने मदरूपिणे ॥ नमो मत्ताय शांताय भैरवाय नमोनमः ॥ ७७ ॥ नमो मलयवासाय कैलासाय नमोनमः ॥ नमः कैलासवासाय कालिकातनयाय ते ॥ ७८ ॥ नमः संसारसाराय भैरवाय नमोनमः ॥ नमो मातृविनोदाय विमलाय नमोनमः ॥ ७९ ॥ नमो यमप्रकाशाय नियमाय नमोनमः ॥ नमः प्राणप्रकाशाय ध्यानाधिपतये नमः ॥ ८० ॥ नमः समाधिरूपाय निर्गुणाय नमोनमः ॥ नमो मंत्रप्रकाशाय मंत्ररूपाय ते नमः ॥ ८१ ॥ नमो वृंदविनोदाय वृंदकाय नमोनमः ॥ नमो बृंहितरूपाय भैरवाय नमो नमः ॥ ८२ ॥ नमो मान्यस्वरूपाय मानदाय नमोनमः ॥ नमो विश्वप्रकाशाय भैरवाय नमोनमः ॥ ८३ ॥ नमो नैस्थिरपीठाय सिद्धपीठाय ते नमः ॥ नमो मण्डलपीठाय उत्कपीठाय ते नमः ॥ ८४ ॥ नमो यशोदानाथाय कामनाथाय ते नमः ॥ नमो विनोदनाथाय सिद्धिनाथाय ते नमः ॥ ८५ ॥ नमो नाथाय नाथाय ज्ञाननाथाय ते नमः ॥ नमः शंकरनाथाय जयनाथाय ते नमः ॥ ८६ ॥ नमो मुद्गलनाथाय नीलनाथाय ते नमः ॥ नमो बालकनाथाय धर्मनाथाय ते नमः ॥ ८७ ॥ विश्वनाथाय नाथाय कार्यनाथाय ते नमः ॥ नमो भैरवनाथाय महानाथाय ते नमः ॥ ८८ ॥ नमो ब्रह्मसनाथाय योगनाथाय ते नमः ॥ नमो

विश्वविहारायविश्वभाराय ते नमः ॥ ८९ ॥ नमो रंगसनाथाय रंगनाथाय ते नमः ॥ नमो मोक्षसनाथाय भैरवाय नमोनमः ॥ ९० ॥ नमो गोरक्षनाथाय गोरक्षाय नमोनमः ॥ नमो मंदारनाथाय नंदनाथाय ते नमः ॥ ९१ ॥ नमो मंगलनाथाय चंपानाथाय ते नमः ॥ नमः संतोषनाथाय भैरवाय नमोनमः ॥ ९२ ॥ नमो निर्धननाथाय सुखनाथाय ते नमः ॥ नमः कारुण्यनाथाय भैरवाय नमोनमः ॥ ९३ ॥ नमो द्रविडनाथाय दरिनाथाय ते नमः ॥ नमः संसारनाथाय जगन्नाथाय ते नमः । ९४॥ नमो माध्वीकनाथाय मंत्रनाथाय ते नमः॥ नमो न्यासनसनाथाय ध्याननाथाय ते नमः ॥ ९५ ॥ नमो गोकर्णनाथाय महानाथाय ते नमः ॥ नमः शुभ्रसनाथाय भैरवाय नमोनमः ॥ ९६ ॥ नमो विमलनाथाय मंडलनाथाय ते नमः ॥ नमः सरोजनाथाय मत्स्यनाथाय ते नमः ॥ ९७ ॥ नमो भक्तसनाथाय भक्तिनाथाय ते नमः ॥ नमो मोहननाथाय वत्सनाथाय ते नमः ॥९८॥ नमो मातृसनाथाय विश्वनाथाय ते नमः ॥ नमो बिंदुसनाथाय जयनाथाय ते नमः ॥ ९९ ॥ नमो मंगलनाथाय धर्मनाथाय ते नमः ॥ नमो गंगासनाथाय भूमिनाथाय ते नमः ॥ २०० ॥ नमो धीरसनाथाय बिंदुनाथाय ते नमः ॥ नमः कंचुकिनाथाय शृंगिनाथाय ते नमः॥ १ ॥ नमः समुद्रनाथाय पर्वतनाथाय ते नमः ॥ नमो मांगल्यनाथाय कद्रूनाथाय ते नमः ॥ २ ॥ नमो वेदांतनाथाय श्रीनाथाय नमोनमः ॥ नमो ब्रह्मांडनाथाय भैरवाय नमोनमः ॥ ३ ॥ नमो गिरिशिनाथाय वामनाथाय ते नमः ॥ नमो बीजसनाथाय भैरवाय नमोनमः ॥ ४ ॥ नमो मंदिरनाथाय मदनाथाय ते नमः॥ नमो भैरवीनाथाय भैरवाय नमोनमः ॥५॥ अंबनाथाय नाथाय जंतुनाथाय ते नमः ॥ नमः कालिसनाथाय भैरवाय नमोनमः ॥ ६ ॥ नमो मुकुंदनाथाय कुंदनाथाय ते नमः ॥ नमः कुंडलनाथाय भैरवाय नमोनमः ॥७॥ नमोऽष्टचक्रनाथाय चक्रनाथाय ते नमः॥ नमो विभूतिनाथाय शूलनाथाय ते नमः ॥ ८ ॥ नमो न्यायसनाथाय न्यायनाथाय ते नमः ॥ नमो दयासनाथाय जंगमनाथाय ते नमः ॥९॥ नमो विशदनाथाय जगन्नाथाय ते नमः ॥ नमः कामिकनाथाय भैरवाय नमोनमः॥१०॥ नमः क्षेत्रसनाथाय जीवनाथाय ते नमः ॥ नमश्चैलंकनाथाय चैलनाथाय ते नमः ॥ ११ ॥ नमो मात्रासनाथाय अमात्राय नमोनमः ॥ नमो द्वंद्वसनाथाय भैरवाय नमोनमः॥ १२ ॥ नमः शूरसनाथाय शूरनाथाय ते नमः ॥ नमः सौजन्यनाथाय सौजन्याय नमोनमः ॥ १३ ॥ नमो दुष्टसनाथाय भैरवाय नमोनमः ॥ नमो भयसनाथाय बिंबनाथाय ते नमः ॥ १४ ॥ नमो मायसनाथाय भैरवाय नमोनमः ॥ नमो विटंकनाथाय टंकनाथाय ते नमः ॥ १५ ॥ नमश्चर्मसनाथाय खड्गनाथाय ते नमः ॥ नमः शक्तिसनाथाय धनुर्नाथाय ते नमः ॥ १६ ॥ नमो वानसनाथाय शापनाथाय ते नमः। नमो यंत्रसनाथाय भैरवाय नमोनमः ॥ १७॥ नमो गंडूषनाथाय गंडूषाय नमोनमः ॥ नमो डाकिनीनाथाय भैरवाय नमोनमः ॥ १८ ॥ नमो डामरनाथाय डारकाय नमोनमः ॥ नमो [illegible]

डंकनाथाय ते नमः ॥ १९ ॥ नमो मांडव्यनाथाय यज्ञनाथाय ते नमः ॥ नमो यजुःसनाथाय क्रीडानाथाय ते नमः ॥ २० ॥ नमः सामसनाथायाथर्वनाथाय ते नमः ॥ नमः शून्याय नाथाय स्वर्गनाथाय ते नमः ॥ २१ ॥ इदं नामसहस्रं मे रुद्रेण परिकीर्तितम् ॥ यः पठेत्पाठयेद्वापि स एव मम सेवकः ॥ २२ ॥ यं यं चिंतयते कामं कारकारं प्रियाकृतिः ॥ यः श्रृणोति दुरापं हि तं तं प्राप्नोति मामकः ॥ २३ ॥ राजद्वारे श्मशाने तु पृथिव्यां जलसन्निधौ ॥ यः पठेन्मानवो नित्यं स शूरः स्यान्न संशयः ॥२४॥ एककालं द्विकालं वा त्रिकालं वा पठेन्नरः ॥ स यावद्बुद्धिमाँल्लोके भवत्येव न संशयः ॥ २५ ॥ यः श्रृणोति नरो भक्त्या स एव गुणसागरः ॥ यः श्रद्धया रात्रिकाले श्रृणोति पठते च वा ॥ २६ ॥ स एव साधकः प्रोक्तः सर्वदुष्टविनाशकः ॥ अर्धरात्रौ पठेद्यस्तु स एव पुरुषोत्तमः ॥ २७ ॥ त्रिसंध्यायां देवगृहे श्मशाने च विशेषतः ॥ वने च मार्गगमने बले दुर्जनसन्निधौ ॥ २८ ॥ यः पठेत्प्रयतो नित्यं स सुखी स्यान्न संशयः ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥ २९ ॥ शूरार्थी लभते शौर्यं पुत्रार्थी पुत्रमाप्नुयात् ॥ एकविंशतिमंत्रेण अक्षरेण सहैव मे ॥ ३० ॥ यः पठेत्प्रातरुत्थाय सर्वकामम वाप्नुयात् ॥ रसार्थी रसमात्रेण रसं प्राप्नोति नित्यशः ॥ ३१ ॥ अन्नार्थी लभते चान्नं सुखार्थी सुखमाप्नुयात् ॥ रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बंधनात् ॥ ३२ ॥ शापार्थी लभते शापं सर्वशत्रुविनाशनम् ॥ स्थावरं जंगमं वापि विषं सर्वं प्रणश्यति ॥ ३३ ॥ सर्वलोकप्रियः शांतो मातृपितृप्रियंकरः ॥ संग्रामे विजयं तस्य यः पठेद्भक्तिसंयुतः ॥ ३४ ॥ सकलं विजयं देवि स्तोत्रमेतत्प्रकीर्तितम् ॥ इदं स्तोत्रं महत्पुण्यं निंदकाय न दर्शयेत् ॥ ३५ ॥ असाधकाय दुष्टाय मातृपितृविकारिणे ॥ अधार्मिकायाकुलीनाय नेदं स्तोत्रं प्रकाशयेत् ॥ ३६ ॥ साधकाय च भक्ताय योगिने धार्मिकाय च ॥ गुरुभक्ताय शांताय दर्शयेत्साधकोत्तमः ॥ ३७ ॥ अन्यथा पापभिन्नः स्यात्क्रोधोऽयं भैरवोत्तमे ॥ तस्मात्सर्वप्रयत्नेन गोपनीयं प्रयत्नतः ॥ ३८ ॥ इदं स्तोत्रं च रुद्रेण रामस्यापि मुखेऽर्पितम् ॥ तन्मुखाद्विश्रुतं लोके दरिद्राय च बंधवे ॥ ३९ ॥ रामेण कथितं भ्रात्रे लक्ष्मणाय महात्मने ॥ ततो दुर्वाससे प्राप्तं तेनैवोक्तं तु पांडवे ॥ ४० ॥ पांडवो ह्यब्रवीत्कृष्णं कृष्णेनेह प्रकीर्तितम् ॥ अस्य स्तोत्रस्य माहात्म्यं रामो जानाति तत्त्वतः ॥ ४१ ॥ रामोऽपि राज्यं संप्राप्ता अस्य स्तोत्रस्य पाठतः ॥ पांडवोऽपि तथा राज्य संप्राप्तो भैरवस्य च ॥ ४२ ॥ अनेन स्तोत्रपाठेन किमलभ्यं भवेदिति ॥ सर्वलोकस्य पूज्यस्तु जायते नात्र संययः ॥ २४३ ॥ इति श्रीह. बृ. ध. उपा. स्त० श्रीबटुकोपासनाध्याये रुद्रयामलोक्तश्रीबटुकभैरव सहस्रनामस्तोत्रनिरूपणं नाम प्रकरणमष्टमम् ॥ ८ ॥ ॥ छ ॥ अथ चतुर्थं श्रीबटुकभैरवसहस्रनामस्तोत्रम् ॥ शिव उवाच ॥ एवं श्रीबटुकं ध्यायेत्त्रिधा भिन्नं गुणैः क्रमात् ॥ शांतिके सात्त्विकं ध्यानं वश्यादौ राजसं मतम् ॥ १ ॥ मारणादौ तामसं तद्देवं ध्यायेन्महेश्वरम् ॥ एवं ध्यात्वा प्रसन्नात्मा स्तोत्रमेतत्पठेन्नरः ॥ २ ॥ अथ नामानि ॥

बटुको बटुकाधीशो बटप्रीतिर्वटेशयः ॥ विषाणिर्वज्रपाणिश्च वज्राभो वज्रवल्लभः ॥ ३ ॥ वामाचारप्रियो वक्रो वक्र
ग्रासो विशारदः ॥ विशापो विघ्नहर्ता च वेतालाढचो विचक्षणः ॥ ४ ॥ विश्वव्यापी विश्वनाथो विश्वो बालपरा
क्रमः ॥ विश्ववंद्यो विश्वरूपो विश्वाधारो विकीरणः ॥५॥ वैद्यो बालो विराड् विष्णुर्व्योमकेशश्च वश्यकृत् ॥ बलि
भुग्बलिभुङ्नाथो बहुनेत्रोंबरो बली ॥ ६ ॥ व्याधिघाती व्याधिकरो व्याध्यात्मा व्याधिवेपनः ॥ कंकालधारी कंदर्प
कामी कांतः कलानिधिः ॥ ७ ॥ कामरूपः कामचारी कल्पवित्कामिनीप्रियः ॥ कोटरेशः कोटपतिः कमनीयः
कपालभृत् ॥ ८ ॥ कंकालः क्रूरहक्कालः करालः कोकिलस्वनः ॥ कपर्दी कम्बुकंठश्च कंबुमाली कलाधरः ॥ ९ ॥
कामिनीवशकृत्कौलः कुलीनः कुलरक्षकः ॥ कपालमाली कुब्जश्च कण्वः कंठीरवः कविः ॥ १० ॥ कलाकाष्ठातनुः
कालशमनः कंबुकुंधली ॥ कुरंगी कपिलः कीरी कुमारः कोपनः कविः ॥ ११ ॥ कंकाली कपिशः केशी केशरी
केशरप्रियः ॥ कौपीनधारी कितवः कितवघ्नः कलाधरः ॥ १२ ॥ कमलावल्लभः कुंठः कठोरकिरणः क्षणः ॥
कौशिकः कौशिकधरः कुशभृत्कुशतल्पगः ॥ १३ ॥ कुशली कश्मलाकर्षी काश्मिरी कररत्नभृत् ॥ कृतघ्नश्च
कृतज्ञश्च कृतवीर्यः कपिध्वजः ॥ १४ ॥ कुशीलवः कुशीलश्च केतकी केतकीप्रियः ॥ कादंबरीयः कादंबः कलकंठः
कपिंजली ॥ १५ ॥ कैटभारिः कंसमर्द्दी कुरंगवदनः कुशः ॥ भूधरो भूधराधीशो भैरवो भैरवीप्रियः ॥ १६ ॥
भूतात्मा भूतपो भूभृद् भृगुजो भूधरात्मजः ॥ भवसूनुर्भवो भीरुर्भ्रामरो भूतसंभवः ॥ १७ ॥ भीषणो भैरवीनाथो
भगवान्भोगिभूषणः ॥ भस्मधारी भ्रमहरो भूताध्यक्षश्च भिक्षुकः ॥१८॥ भ्रूणहा भूतहा भूतो भीतोऽभीतोऽभयंकरः ॥
खरांतकृत्खर्पराशिः खड्गपाणिः खलाप्रियः ॥ १९ ॥ खंडभूः खंडपरशुः खड्गी खट्वांगभृत्खलः ॥ खेचरः खेचरी
नाथः खपुरः खगनायकः ॥ २० ॥ खेलाप्रियः खातकीर्तिः खरनादः खरव्रतः ॥ खेचरीकृद् खेटकभृत् खातीतः
खांडवाशनः ॥ २१ ॥ गंधर्वगीतो गंगेशो गोपतिर्गोपिकापतिः ॥ गर्विष्ठो गर्वहा गेयो गौरो गौरीसुतो गुरुः ॥२२॥
गीर्वाणगीतो गीर्वाणो गाढो गाढांधकारहा ॥ गेयो गरुडगो गोऽवो गुप्तो गोप्ता गराशनः ॥ २३ ॥
गजकृत्तिधरो गुंजो गुंजाहारधरो गजः ॥ गेयप्रियो गह्वरगो गुंजस्थो गुंजगायकः ॥ २४ ॥ गोवर्द्धनधरो गोष्ठ
रक्षको गोकुलप्रियः ॥ गंभीरो गोधनो गोपो गोधाभृद्गिरिजात्मजः ॥ २५ ॥ जगदीशो जनाध्यक्षो
जीवनो जीवनप्रियः ॥ जीवाजुजीवनच्छेदी जीवितात्मा जनार्दनः ॥ २६ ॥ जृंभणश्च जवी जीवो जैनो जैनजयं
कर ॥ जपाप्रियो जपासक्तो जापको जपकार्थकृत् ॥ २७ ॥ जंबूश्यामो जितक्रोधो जितारातिर्जितासुरः ॥ ॥ ३० ॥
जंबुको जानकीजानिर्जटिलो जनमेजयः ॥ २८ ॥ जीर्णो जीर्णोज्ज्वलन्नेत्रो जामदग्न्यो जयप्रदः ॥ झषकेतु
र्झषहरो झिंटीशो झषभोजितः ॥ २९ ॥ झंकारकारी झंपा च झषवान्झषवल्लभः ॥ मधुरो मदिरामत्तो
मेघनादो मृगाधिपः ॥ ३० ॥ मधुमत्तो मद्यगंधो मेदस्वी मेघदीधितिः ॥ मोदनो मेदिनीनाथो मघवा मण्ड

भूषणः ॥ ३१ ॥ माधुकरीप्रियो मत्तो मेधावी मधुसूदनः ॥ मदनो मदनप्रीतो मुकुंदो मादनो मरुत् ॥ ३२ ॥
अथ नवश्लोकाः क्षेपकाः ॥ मकरो माधवो मीनो मीनकेतुर्महेश्वरः ॥ महेषुमर्दनो मंथो मिथुनेशोऽमराधिपः
॥ ३३ ॥ मरीचिर्मंजुलो मोहो मोहहा मोहमर्दनः ॥ मोहको मोहनो मेघप्रियो मोहविनायकः ॥ ३४ ॥ मही
पतिर्महीशानो महीराजो मनोहरः ॥ महीश्वरो महीपालो महीनाथो महीप्रियः ॥ ३५ ॥ महीधरो महादेवो
मनुराजो मुनिप्रियः ॥ मानी मौनधरो मेधो मंदिरो मतिवर्द्धनः ॥ ३६ ॥ मतिदो मंथरो मन्त्री मन्त्रीशो मन्त्रनाय
कः ॥ मेधावी मानदो मानी मानहा मानमर्दनः ॥ ३७ ॥ मीनगो मकराधीशो मधुरो मणिरंजितः ॥ मणिर
म्यो मणिभ्राता मणिमंडनमंडितः ॥ ३८ ॥ मन्त्रपो मंत्रदो मुग्धो मोक्षदो मोक्षवल्लभः ॥ मल्लो मल्लप्रियो मंचो
मल्लको मेलनप्रभुः ॥ ३९ ॥ मल्लिको मल्लिकागंधी मल्लिकाकुसुमप्रियः ॥ मालतीशो मघानाथोऽमोघमूर्तिर्मघे
श्वरः ॥ ४० ॥ याचको याज्ञिको यज्ञो यज्ञेशो यज्ञवर्द्धनः ॥ रमापती रमाधीशो रमेशो रामवल्लभः ॥ ४१ ॥
इति क्षेपकाः ॥ धनेशो ध्रुवधूर्धीमान्धिषणो धूम्रलोचनः ॥ दाता दापयिता दुर्गो दांतो दांताशयो दमः ॥ ४२ ॥
देवो देवाधिपो दावो दुःखहा दुःखसेवितः ॥ दरिद्रो दारदो दारो देवतात्मा दमी दयी ॥ ४३ ॥ दंडकृद्दंडहा
दीप्तो दीप्तकेशो दयान्वितः ॥ दार्वीकरो दरी दीर्घो दीपनो दीपवल्लभः ॥ ४४ ॥ दिगम्बरो दीर्घदंष्ट्रो दक्षिणो
दक्षिणोदरः ॥ दंष्ट्री दंष्ट्रिप्रियो दैत्यो दिव्यो दिव्यपराक्रमः ॥ ४५ ॥ दैत्यहा दक्षिणार्हश्च दीर्घपृष्ठो दिवाकरः ॥
घंटावादी घनरवो घनाभो घूत्करो घनः ॥ ४६ ॥ घंटापथी घटो घूको घघ्वकरपरिवारितः ॥ घणी घर्मांशुरघहा
घातहा घातकारकः ॥ ४७ ॥ घोरो घनाघनोऽघीशो घस्मरो घोरघोषवान् ॥ छगलंडश्छलच्छेत्ता छत्री छात
छविश्छली ॥४८॥ छगलाक्षो छदो छिन्नश्छुच्छुरीकश्छिदांकुरः ॥ छन्दश्छंदप्रियश्छंदश्छिद्रुरश्छद्महोच्छ्रितः॥४९॥
तपनीयप्रभजटस्तरुणस्तरुणीप्रियः ॥ तुंदिलस्तपनस्तेयस्तोमरस्तोमरप्रियः ॥ ५० ॥ तुष्कतुरुष्कस्तिल
भुक् त्रिमूर्तिस्त्रिपुरांतकः ॥ त्रिशूलधारी त्रिशीर्षी त्रिपुरश्च त्रिलोकपः ॥ ५१ ॥ त्रिनेत्रस्त्रिपुरावासस्तेजस्वी
त्रिदिवस्पतिः ॥ त्रिविक्रमस्तृणावर्त्तस्तृप्तस्तृप्तिप्रियस्तमः ॥ ५२ ॥ तमोपहस्तिमिस्रेशस्त्रिदशस्त्रीश्वरस्तपः ॥
त्रिनेत्रतनयस्तिग्मस्तमोमूर्तिस्तमोमयः ॥ ५३ ॥ तापनस्तोदनस्त्रेता तारानाथस्त्रिलोचनः ॥ नित्यो निरंजनो
नेता नीतिज्ञो नयवल्लभः ॥ ५४ ॥ नंदनो निपुणो नम्रोनम्रोऽनेमिर्निमिर्नयः ॥ नागहारो नागपाशो नित्यका
मो नतिप्रियः ॥ ५५ ॥ निर्ममो नमनो नान्यो नैगमो नैगमेश्वरः ॥ नित्यक्लिन्नो नित्यनवो निरुद्धो नन्ददीपकः ॥ ३१ ॥
॥ ५६ ॥ निर्मलो निर्मलाकारो न्यस्तनिंदो नदीश्वरः ॥ नक्षत्रनाथो निगमो निगमारंभको नवः ॥ ५७ ॥
निधीशो निरहंकारो नानारूपी नमेरुकः ॥ नास्तिकारी नास्तिकहा निश्चितो निश्चिताशयः ॥ ५८ ॥ निश्चलोऽने
कवदनो नाथो नारायणो नखी ॥ नरकघ्नो नरकदो नीलो नीलालकोऽनलः ॥ ५९ ॥ नीलांबरो नीलकंठो

नीलजीमूतसन्निभः ॥ पंडितः पंचवदनः पंचमः पंचमप्रियः ॥ ६० ॥ पंचयज्ञः पंचवातः पंचवित्तः पविप्रियः ॥ पंचश्लेष्मा पंचबाणः पंचस्थानः परंतपः ॥ ६१ ॥ परमायुः परः पद्मी प शः पद्मवल्लभः ॥ पद्मनाभः पद्ममुखः पद्मः पद्मासनस्थितः ॥ ६२ ॥ पद्मजः पद्मनिलयः पद्मगन्धः परात्परः ॥ पर्वतः पर्वताधारः पारदः पारदप्रियः ॥ ॥ ६३ ॥ परदारपरः प्रौढः पटुः पांडुरलोचनः ॥६४॥ पेटभृत्पेटकृत्पेटी पन्नगी पन्नगेश्वरः ॥ पांडुहा पांडुरः पिंडी पंचभूतप्रशासनः ॥ ६५ ॥ पतंगः पक्षिराजश्च परलोकप्रदः प्रभुः ॥ पानदः पानपः पानी पानारुणविलोचनः ॥६६॥ पिशाचघ्नः पिशाचेशः पिशिताशी पितामहः ॥ पिता प्रतापवान्पाशी पाशिनाथः पशुप्रियः ॥६७॥ पशुभोक्ता पशुपतिः पशुप्रेष्ठः पशूदरः ॥ पीनसारिः पिपासार्त्तः पीडाकृत्पीडनाशनः ॥ ६८ ॥ प्रेतघ्नः प्रेतकुलपः प्रेतवाहः प्रकंपनः ॥ प्रेतनाथः प्रेतपूज्यः पीतवासाः प्रजागरः ॥ ६९ ॥ प्रजापतिः प्रजानाथः परिपूर्णः प्रियोऽप्रियः ॥ पर्जन्यकृत्प्रशमनः परमः परमास्पदः ॥ ७० ॥ प्रसन्नगः प्रतिच्छन्नः प्रतिभाकृत्प्रपूजितः ॥ प्रमेहघ्नः प्रमेही च प्रमेहकृदथप्रभः ॥ ७१ ॥ प्रमः प्रमादहा प्रौढः प्रौढिदः प्रौढिवल्लभः ॥ प्रेमदः प्रमदाप्रेमी प्रमदः प्रमदाप्रियः ॥ ७२ ॥ प्रकामदः प्रकामेशः प्राणदः प्राणवल्लभः ॥ प्राणाधारः प्रयागश्च प्रयागनिलयप्रदः ॥ ७३ ॥ परिचारः परिवरः प्रशांतः प्रतिभानवान् ॥ प्रेयः प्रेयो वियोगी च प्रमथश्च प्रियंवदः ॥ ॥ ७४ ॥ सारमेयानुगः सीधुः सीधुः सीधुपवल्लभः ॥ सावधानः साधुपूज्यः सारमेयधरः समः ॥ ७५ ॥ सर्वापत्तारणः सिद्धः सिद्धिदः सिद्धिसेवितः ॥ सामंतभद्रः संतोषी सत्यः सत्यपराक्रमः ॥ ७६ ॥ सत्यसंघः सत्यवक्ता सत्पदः सत्यवल्लभः ॥ सत्यभामापतिः शूरः संपन्नःसंपदालयः ॥ ७७ ॥ सरस्वान् सागरः सेतुः सेतुकृत्सेतुपालकः ॥ समुद्रसीमा सामंतः स्मरारिः सत्यसंगरः ॥ ७८ ॥ स्मरः स्मरप्रियः स्मेरः स्मरदः स्मरसुन्दरः ॥ समिद्धः संमदः सिंधुः सामगः सामगार्चितः ॥ ७९ ॥ समयः समयाचारः शंकरप्रियबांधवः ॥ संमोहदः संशयदः संशयघ्नः समुद्धतः ॥ ८० ॥ सोमः सोमधरः सौम्यः सौम्यः शांतजनप्रियः ॥ सुन्दरः सुन्दराधारसुरापः सुरसः सुरः ॥ ८१ ॥ सुरासक्तः सुगमोदी सुरापालः सुराप्रियः ॥ स्वर्गः स्वर्गपतिः स्वर्गी स्वगदः स्वर्गवल्लभः ॥ ८२ ॥ सुखी सुखाकरः सौख्यसिंधुः सिंधुरनायकः ॥ सारस्वतः स्वानुभवः स्वानुभावस्वनो ध्रुवः ॥ ८३ ॥ स्वयंभूः कुसुमामोदी स्वयंभूकुसुमप्रियः ॥ सम सर्वतोभद्रः सर्वसत्त्वः सरोवरः ॥ ८४ ॥ सारी सरीसृपाधीशः समाराध्यः समामयः ॥ संतानदः सत्त्वदाता सरोजाक्षः सरोजभूः ॥ ८५ ॥ सर्वसिद्धिप्रदः सारी सरोजनयनप्रियः ॥ सुपर्वनाथः सर्वज्ञः सर्वगः सर्वदीपनः ॥८६॥ श्मशानवासी स्तंभी च सर्पयुक्तः सहस्रदृक् ॥ सहस्रदो सहस्रांघ्रिः सहस्रकिरणप्रभः ॥ ८७ ॥ शौरिः शंभुसुतः

बृ. ध. बटु. ॥ ३३॥

सर्वेः सर्वात्मजः शमः ॥ शतानन्दः शशधरः शबरः शबरीसुतः ॥ ८९ ॥ शोभनः शोभनावासः शोकहा
शोकनाशनः ॥ शतानन्दः शूलपाणिः शुचिः शौचपरः शुभः ॥ ९० ॥ शिखिसखः श्रुतिधरः श्रुतिगीतः श्रुति
प्रियः ॥ शुद्धाशयः शुद्धिकरः शुद्धः शुद्धजनप्रियः ॥ ९१ ॥ शोणः शोणाधरः शोणनेत्रः शोणांगरागभृत् ॥
शीतः शीताशयः शौंडः शौंडिकः शौंडिकप्रियः ॥ ९२ ॥ शाब्दहा शाब्दद: शार्ङ्गी शरी शरणदः शिशुः ॥
शुद्धनीलांजनप्रख्यः शांतिदः शांत इत्यपि ॥९३॥ शकः शाकंभरीयश्च शंकितः शंकिताननः ॥ हरो हरिर्हयग्रीवः
हयारिकुसुमप्रियः ॥९४॥ हेरंबो हयमेधी च हेषणो हरवल्लभः ॥ हव्यवाहो हुतवहो हारी हारीतपूजितः ॥ ९५ ॥
हिंस्रहा हिंस्रयो हंतिर्हेलानुश्च हलायुधः ॥ हिरण्यरेता हरिणो हरिणाक्षो हारिप्रियः ॥ ९६ ॥ हिमो हिमालयचरो
हिमधामा विभूषणः ॥ हेममाली हेमकांतिर्हैमाचलकृतालयः ॥ ९७ ॥ हारको हारशाली च होता होमो हुति
ईयः ॥ यशःप्रदो यशोवृद्धो यशस्वी यशसां निधिः ॥ ९८ ॥ यज्वा यजनकामश्च यजुर्यजनतत्परः ॥ यमो
यमभयध्वंसी यमवद्यो यमांतकृत् ॥ ९९ ॥ यज्ञभोक्ता यज्ञकरो यवनो यवनोद्धतः ॥ यवप्रियो यौवनाढ्यो
युवतीवल्लभो यवी ॥ १०० ॥ यामलो यामलाधीशो यशोदानन्दवर्धनः ॥ योद्धा युद्धप्रियो यूपो यौक्तिको
योगिनीपतिः ॥ १ ॥ योगी योगीश्वरो योक्ता योगिराड्योगिसेवितः ॥ रतिप्रदो रतिकरो रतिनाथो रतिप्रदः ॥
॥ २ ॥ रमणीयो रमानाथो रजनीशो रमेश्वरः ॥ रससिद्धीश्वरो रम्यो रसज्ञो रसपूजितः ॥ ३ ॥ रंजनो रोचनो
रागो रोगो रोगकुलांतकृत ॥ रासो रासप्रियो रंता रंगो रंगकृतास्पदः ॥ ४ ॥ रक्तपो रक्तनयनो रक्तदो रक्तना
शनः ॥ रुरू रुद्रो रौद्रमुखो राजा राजीववर्द्धनः ॥ ५ ॥ रसो रतिरसाधारो रसालो रविलोचनः ॥ लोकनाथो
लोकचक्षुर्ललितो ललितात्मजः ॥ ६ ॥ लंबोदरो लंबदंष्ट्रो लोलो लोलविलोचनः ॥ लोहिताक्षो लोहितपो
लालपो ललनाप्रियः ॥ ७ ॥ लेलिहानो ललज्जिह्वो लक्ष्मीनाथो लुलायुगः ॥ क्षेत्रपालश्च क्षेत्रज्ञः क्षत्रियः क्षेत्रप:
पः क्षमी ॥ ८ ॥ क्षमाधारः क्षौमधरः क्षेमकारी क्षयापहः ॥ क्षपापतिधरः क्षुद्रः क्षांतः क्षान्तजनप्रियः ॥ ९ ॥
क्षितिदः क्षतिदः क्षौद्रः प्रियः क्षीरप्रियोऽक्षयः ॥ क्षोभहा क्षोभदोऽक्षोभ्यः क्षिप्रसिद्धप्रदो क्षुपः ॥ १० ॥ क्षेमकरः
क्षौद्रपिंगः क्षामशत्रुः क्षुधाकरः ॥ क्षोभणः क्षीरदः क्षीरी क्षवकः क्षवदोषहा ॥ ११ ॥ अंत्रयज्ञोपवीतीशोऽजग
रोऽग्निरहो रहः ॥ इंदुरिंद्रिदिरो बिंदुरिंद्रिभः इन ईश्वरः ॥ १२ ॥ डिंभ ऊर्जस्वलः स्वस्तिः स्वाहाभुग्भुरुरर्जुकः ॥
ज्ञानचक्षुश्चोर्ध्वरेता दशदिक्पालपालकः ॥ १३ ॥ शाकिनेयो डाकिनेयो राकिनेयस्तथैव च ॥ काकिनेयो
लाकिनेयो डाकिनेयोऽपि हाकिनिः ॥ १४ ॥ पंचाशद्वर्णतनुकः षडाधारः षडध्वकः ॥ अष्टाधारोऽष्टमूर्तिश्च ब्रह्म ॥ ३३ ॥
रंध्रकृतालयः ॥ १५ ॥ सहस्रपत्रभवनो द्विपत्रपरमास्पदः ॥ षोडशारकृतावासी द्वादशच्छदमंडनः ॥ १६ ॥
दशारकृतविश्रामः षडारविहितादरः ॥ चतुर्दलविकासी च चतुरस्रविनोदनः ॥ १७ ॥ इडाधारः सुषुम्णेशः

उ. स्त. उपा.

पिंगलापरिपालकः ॥ संसारसाक्षी चिद्रूपः परमात्मा सदाशिवः ॥ १८ ॥ पंचविंशतितत्त्वात्मा विकृतः प्रकृतेः परः ॥ अव्यक्तश्चाव्ययो हंसो नादः सत्त्वात्मको विभुः ॥ १९ ॥ एतद्बटुकनाथस्य नाम्नां साग्रं सहस्रकम् ॥ यः पठेत्प्रातरुत्थाय मध्याह्ने वा निशामुखे ॥ २० ॥ मासत्रयाद्ददात्यस्मै श्रीमद्बटुकभैरवः ॥ मनोऽभिलषितं देवि देवानामपि दुर्लभम् ॥ २१ ॥ पुरश्चरणमेतस्य नामसंख्यं प्रकीर्तितम् ॥ तद्दशांशं प्रजुहुयात्संस्कृते हव्यवाहने ॥ २२ ॥ तंदुलैस्तु त्रिमध्वक्तैस्तिलमिश्रैरतंद्रितः ॥ तर्पणं तद्दशांशेन प्रोक्तद्रव्येण कल्पयेत् ॥२३॥ मार्जनं तद्दशांशेन तद्दशांशेन भोजनम् ॥ दक्षिणा तु यथाशक्ति कल्पनीया मनीषिभिः ॥२४॥ एवं कृते भवेत्सिद्धिः स्तोत्ररूपो मनुस्त्वयम् ॥ छागचर्मासनासीनोऽरिष्टबीजाक्षमालया ॥२५॥ त्रिसुगंधिसुगंधास्यो मुदितात्मा तु साधकः॥ पर्वताग्रे तथारण्ये पुण्ये चोपवनेऽथवा ॥२६॥ सिन्धुसंभेदके वापि गोष्ठे वा बिल्वमूलके॥शिवालये गृहे शून्ये दरदारुणितांतरे ॥ २७ ॥ यथोक्तविधिनाभ्यर्च्य देवं पश्चाज्जपेन्मनुम् ॥ स्तोत्ररूपमिदं प्रातरारभ्यार्द्धदिनावधि ॥२८॥ ततो हविष्यभोजी स्यात्पौरश्चरणिको नरः ॥ होमे तु चतुरस्रं स्यात्कुंडं सर्वांगसुंदरम् ॥ २९ ॥ प्रतिनाम प्रजुहुयादुक्तद्रव्येण पंडितः ॥ ततः प्रयोगान्कारयेद्वांछितार्थसमृद्धिदान् ॥३०॥ करभैरयुतं हुत्वा कवितामाप्नुयाद्व्रती ॥ कमलैरचलां लक्ष्मीं वटकैरन्नसंपदाम् ॥ ३१ ॥ हरिद्राक्तांधसा वश्यं जगदेतच्चराचरम् ॥ निंबपत्रकटुस्नेहराजिकालवर्णैर्नरः ॥ ३२ ॥ हुत्वा मारयति क्षिप्रं वैरिणो दुर्जनानपि ॥ सिंदुरादेस्तु होमेन मोहयेदीप्सितांगनाम् ॥३३॥ वादेषु स्तंभयेद्वाचं शत्रूणां दधिहोमतः ॥ तत्तद्रोगोक्तभैषज्यैस्तत्तद्रोगप्रणुत्तये ॥ ३४ ॥ डाकिनीग्रहभूतादेः प्रशांत्यै माषहोमतः ॥ प्रत्यहं यः पठेदेतन्मनुजः सुसमाहितः ॥ ३५ ॥ वत्सरानंतरं तस्य दर्शनादेव भूभुजः ॥ वशीभवंति सहसा सामात्याः किंकरा इव ॥ ३६ ॥ स्थिरीभवति तद्गेहे चंचलापि त्वचंचला ॥ मासत्रयस्य पठनादपस्मारादयो गदाः ॥ ३७ ॥ नश्यंत्येव न संदेहः सत्यं मम वचो यदि॥ निर्धनो धनमाप्नोति सुतार्थी लभते सुतान् ॥ ३८ ॥ यद्यत्कार्यं समुद्दिश्य पठेदेतदवाप्नुयात्॥नारीभये वह्निभये भूमिपालभयेऽपि च ॥ ३९ ॥ परिपंथिभये घोरे महासंग्रामसंकटे ॥ अरण्यसंकटे चैव पठेत्रिस्त्रिरनन्यधीः ॥ ४० ॥ तत्तद्भयात्प्रमुच्येत सत्यं सत्यं सुरेश्वरि ॥ इदं रहस्यं परमं पवित्रं पापनाशनम् ॥४१॥ अपमृत्योश्च शमनं सर्वाऽमंगलनाशनम् ॥ बन्दीप्रमोचनं पुंसां दुःस्वप्नविनिवारणम् ॥ ४२ ॥ शृणु पार्वति यत्नेन विशेषेणास्य यत्फलम् ॥ अलोहप्रहरणं सूक्ष्मं महाक्लेशनिवारणम् ॥ ४३ ॥ स्तोत्रमेतत्परिध्वंसे शस्त्रं हि मम प्रेरितम् ॥ तथा वशीकरं राज्ञामप्रयोगमचूर्णकम् ॥४४॥ तथापस्मारभूतादेर्नाशनं वाथ नौषधम् ॥ १४५ ॥ इति श्रीह० बृ० ध० उपा० स्त० श्रीबटुकभैरवोपासनाध्याये श्रीबटुकभैरवसहस्रनामस्तोत्रनिरूपणं नाम प्रकरणं नवमम् ॥ ९ ॥ छ ॥ ॥ अथ श्रीबटुकभैरवाष्टोत्तरशतनामस्तोत्रम् ॥ उक्तं च कालसंकर्षणतंत्रे ॥ ॥ ईश्वर उवाच ॥ ॥ शृणु देवि प्रवक्ष्यामि गो

वस्य महात्मनः ॥ बटुकस्य शतं नाम्नामष्टोत्तरमनुत्तमम् ॥ १ ॥ आपदुद्धारकमिदं सर्वशत्रुनिवारणम् ॥ अप मृत्युहरं दिव्यमाधिव्याधिनिबर्हणम् ॥ २ ॥ विश्वेषां वश्यजननं विवादे विजयप्रदम् ॥ मारीभये चोरभये वाताग्निजलजे भये ॥ ३ ॥ सकृत्पठनमात्रेण सर्वोपद्रवनाशनम् ॥ धनसंपत्तिजननं पुत्रपौत्रविवर्द्धनम् ॥ ४ ॥ नरनारीनृपाणां च वशीकरणमंबिके ॥ सर्वशास्त्रेषु सारं यद्वेदादभ्युद्धृतं मया ॥ ५ ॥ तदहं ते प्रवक्ष्यामि बटुकस्तोत्रमुत्तमम् ॥ अस्य श्रीबटुकस्तोत्रमंत्रस्य सुमहीयसः ॥ ६ ॥ ऋषिः कालाग्निरुद्रश्च छंदोऽनुष्टुप् प्रकीर्तितम् ॥ आपदुद्धारको देवो देवताबटुकेश्वरः ॥ ७ ॥ भैरवीवल्लभः शक्तिर्बीजं ह्रींकार उच्यते ॥ कीलकं दंडपाणिः स्यान्नीलो वर्णः प्रकीर्तितः ॥ ८ ॥ समस्तशत्रुदमने समस्तापन्निवारणे ॥ सर्वाभीष्टप्रदाने च विनियोगः प्रकीर्तितः ॥ ९ ॥ अथ ध्यानं प्रवक्ष्यामि सावधाना शृणु प्रिये ॥ यस्य स्मरणमात्रेण सर्वपापैः प्रमुच्यते ॥ १० ॥ नीलजीमूतसंकाशो जटिलो रक्तलोचनः ॥ दंष्ट्राकरालवदनः सर्पयज्ञोपवीतवान् ॥ ११ ॥ दंष्ट्रायुधालंकृतश्च कपालस्रग्विभूषितः ॥ हस्तन्यस्तकिरीटीको भस्मभूषितविग्रहः ॥ १२ ॥ नागराजकटीसूत्रो बालमूर्तिर्दिगंबरः ॥ मंजुशिंजानमंजीरपादकंपितभूतलः ॥ १३ ॥ भूतप्रेतपिशाचैश्च सर्वतः परिवारितः ॥ योगिनीचक्रमध्यस्थो मातृमंडलवेष्टितः ॥ १४ ॥ अट्टहासस्फुरद्वक्त्रो भृकुटीभीषणाननः ॥ भक्तसंरक्षणार्थाय दिक्षु भ्रमणतत्परः ॥१५॥ एवंभूतस्तु बटुको ध्यातव्यो भैरवीश्वरः ॥ एवं ध्यात्वा ततो नाम्नामष्टोत्तरशतं विभो ॥ १६ ॥ सावधानेन मनसा भक्तियुक्तेन कीर्तयेत् ॥ १७ ॥ तारो मायातदनु बटुकाय द्वयं क्ष्रौं तदापच्छब्दोद्धाराय शिरसि ज्ञेयोकुरुद्वंद्वमुच्चैः ॥ ह्रीं बीजं यद्बटुकपुटितं भौवनं चाग्निजाया एषा विद्या बटुकभव ते वांछितं मे ददातु ॥१८॥ " ॐ ह्रीं बां बटुकाय क्ष्रौं क्ष्रौं आपदुद्धरणाय कुरुकुरु बटुकाय ह्रीं बटुकाय स्वाहा ॥ इति मूलमंत्रः ॥ अथ स्तोत्रम् ॥ ॐ ह्रीं बटुको वरदः शूरो भैरवः कालभैरवः ॥ भैरवीवल्लभो भव्यो दंडपाणिर्दयानिधिः ॥ १९ ॥ वेतालवाहनो रौद्रो रुद्रभ्रुकुटिसंभवः ॥ कपाललोचनः कांतः कामिनीवशकृद्वशी ॥ २० ॥ आपदुद्धारणो धीरो हरिणांकशिरोमणिः ॥ दंष्ट्राकरालो दृष्टोष्ठो धृष्टो दुष्टनिबर्हणः ॥ २१ ॥ सर्पाहारः सर्पशिरः सर्पकुंडलमंडितः ॥ कपाली करुणापूर्णः कपालीकशिरोमणिः ॥ २२ ॥ श्मशानवासी मांसाशी मधुमत्तोट्टहासवान् ॥ वाग्मी वामव्रतो वाङ्मी वामदेवप्रियंकरः ॥ २३ ॥ वनेचरो गिरिचरो वसुदो वायुवेगवान् ॥ योगी योगव्रतधरो योगिनीवल्लभो युवा ॥ २४ ॥ वीरभद्रो विश्वनाथो विजेता वीरवंदितः ॥ भूताध्यक्षो भूतधरो भूतभीतिनिवारणः ॥२५॥ ॥ ३९ ॥
कलंकहीनः कंकाली क्रूरः कुक्कुरवाहनः ॥ गाढो गहनगंभीरो गणनाथसहोदरः ॥ २६ ॥ देवीपुत्रो दिव्यमूर्तिर्दीप्तिमान्दीप्तलोचनः ॥ महासेनप्रियकरो मान्यो माधवमातुलः ॥ २७ ॥ भद्रकालीपतिर्भद्रो भद्रदो भद्रवाहनः ॥ पशूपहाररसिकः पाशी पशुपतिः पतिः ॥ २८ ॥ चंडः प्रचंडचंडेशश्चंडी हृदयनंदनः ॥ दक्षो दक्षाध्वर

हरो दिग्वासा दीर्घलोचनः ॥ २९ ॥ निरांतको निर्विकल्पः कल्पः कल्पांतभैरवः ॥ मदतांडवकृन्मत्तो महादेव प्रियो महान् ॥ ३० ॥ खट्वांगपाणिः खातीतः खरशूलः खरांतकृत् ॥ ब्रह्मांडभेदनो ब्रह्मज्ञानी ब्राह्मणपालकः ॥ ३१ ॥ दिक्चरो भूचरो भूष्णुः खेचरो खेलनप्रियः ॥ सर्वदुष्टप्रहर्त्ता च सर्वरोगनिषूदनः ॥ ३२ ॥ सर्व कामप्रदः शर्वः सर्वपापनिकृंतनः ॥ इत्थमष्टोत्तरशतं नाम्नां सर्वसमृद्धिदम् ॥ ३३ ॥ आपदुद्धारजनकं बटुकस्य प्रकीर्तितम् ॥ य एतच्छृणुयान्नित्यं लिखेद्वा स्थापयेद्गृहे ॥ ३४ ॥ धारयेद्वा गले बाहौ तस्य सर्वाः समृद्धयः ॥ न तस्य दुरितं किंचिन्न चोरनृपज भयम् ॥ ३५ ॥ न चापमृत्यू रोगेभ्यो डाकिनीभ्यो भयं नहि ॥ न कूष्मांड ग्रहादिभ्यो नापमृत्योन च ज्वरात् ॥ ३६ ॥ मासमेकं त्रिसंध्यं च शुचिर्भूत्वा पठेन्नरः ॥ सर्वदारिद्र्यनिर्मुक्तो निधिं पश्यति भूतले ॥ ३७ ॥ मासद्वयमधीयानः पादुकासिद्धिमान्भवेत् ॥ अंजनं गुटिका खड्गं धातुवाद रसायनम् ॥ ३८ ॥ सारस्वतं च वेतालवाहनं बिलसाधनम् ॥ कार्यसिद्धिं महासिद्धिं मंत्रं चैव समीहितम् ॥ ॥ ३९ ॥ वर्षमात्रमधीयानः प्राप्नुयात्साधकोत्तमः ॥ एतत्ते कथितं देवि गुह्याद्गुह्यतरं परम् ॥ कालसंकर्षणीतंत्रे कल्मीकल्मषनाशनम् ॥ ४० ॥ इति श्रीह० बृ० ध० उपा० स्त० श्रीबटुकोपासनाध्याये कालसंकर्षणतंत्रोक्तं श्रीबटुकभैरवाष्टोत्तरशतनामस्तोत्रनिरूपणं नाम प्रकरणं दशमम् ॥ १० ॥ छ ॥ ॥ अथ श्री बटुकभैरवस्तवराजः ॥ उक्तं च रुद्रयामले ॥ ॥ आचम्य प्राणानायम्य ॥ मेरुपृष्ठे सुखासीनं देवदेवं त्रिलोचनम् ॥ शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥१॥ श्रीपार्वत्युवाच ॥ भगवन्सर्वधर्मज्ञ सर्वशास्त्रागमादिषु ॥ आपदुद्धारकं मंत्रं सर्वसिद्धिप्रदं नृणाम् ॥ २ ॥ सर्वेषां चैव भूतानां हितार्थं वांछितं मया ॥ विशेषतस्तु राज्ञां वै शांतिपुष्टिप्रदायकम् ॥ ३ ॥ प्रसाधनमिति वा पाठः ॥ अंगन्यासकरन्यासदेहन्यासससमन्वितम् ॥ वक्तु मर्हसि देवेश मम हर्षविवर्द्धनम् ॥ ४ ॥ ॥ ईश्वर उवाच ॥ श्रृणु देवि महामंत्रमापदुद्धरहेतुकम् ॥ सर्व दुःखप्रशमनं सर्वशत्रुविनाशनम् ॥ ५ ॥ अपस्मारादिरोगाणां ज्वरादीनां विशेषतः ॥ नाशनं स्मृतिमात्रेण मन्त्र राजमिमं प्रिये ॥ ६ ॥ ग्रहराजभयानां च नाशनं सुखवर्द्धनम् ॥ स्नेहाद्वक्ष्यामि ते मंत्रं सर्वसारमिमं प्रिये ॥७॥ सर्वकामार्थदं मंत्रं राजभोगप्रदं नृणाम् ॥ आपदुद्धारमंत्रस्य मूलविद्यां श्रृणु प्रिये॥८॥ यस्य संस्मरणादेव भूतानां नाशनं वरम् ॥ प्रणवं पूर्वमुद्धृत्य देवीप्रणवमुद्धरेत् ॥ ९ ॥ बटुकायेति वै पश्चादापदुद्धारणाय च ॥ कुरु द्वयं ततः पश्चाद्बटुकाय पुनर्वदेत् ॥ १० ॥ देवीप्रणवमुद्धृत्य मंत्रोद्धारमिमं प्रिये ॥ एकविंशतिवर्णास्तु मंत्रे सत्यं प्रकाशितः ॥११॥ यंत्रोद्धारमिमं देवि त्रैलोक्ये चातिदुर्लभम् ॥ तद्यंत्रं च प्रवक्ष्यामि यंत्रे देवं च पूजयेत् ॥ १२ ॥ त्रिकोणं श्च तथा दत्त्वा षट्कोणं च ततो न्यसेत् ॥ ततश्च वलये कुर्याच्चतुष्कोणं ततश्चरेत् ॥ १३ ॥ मंत्रं दलं समारभ्य मंत्राक्षराणि पूरयेत ॥ उपरि तानि सव्येन सर्वाणि

बीजं न्यसेत्सदा ॥ दिक्पालांश्च समारोप्य कोणेष्टभैरवाँ लखेत् ॥ १५ ॥ एवं यन्त्रं च सम्पूज्य स्वस्थो भूत्वा जपेन्नरः ॥ मन्त्राक्षराणां संख्याकैस्तन्तुभिर्ब्रह्मसूत्रजैः ॥ वर्त्ति दत्त्वा घृतेनैव दीपं तत्र प्रदापयेत् ॥ १६ ॥ दीप दानमंत्रो यथा ॥ ॐ ह्रीं श्रीं क्लीं ह्रीं श्रीं बं सर्वज्ञाय महाबलपराक्रमाय बटुकाय इमं दीपं गृहाण सर्वकार्यार्थसाधकाय दुष्टान्नाशय २ त्रासय २ सर्वतो मम रक्षां कुरु २ फट् स्वाहा ॥ १७ ॥ त्रिराचम्य च मन्त्रैश्च हस्तं प्रक्षाल्य वै तदा ॥ हस्ते जलं ततो गृह्य विनियोगं पठेद्द्वयम् ॥१८॥ अप्रकाश्यमिमं मन्त्रं सर्वशक्तिसमन्वितम् ॥ स्मरणादेव मन्त्रस्य भूतप्रेतपिशाचकाः ॥ १९ ॥ विद्रवंत्यतिभीता वै कालरुद्रादिव प्रजाः ॥ पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ॥ २० ॥ नाग्निचोरभयं तत्र ग्रहराजभयं तथा ॥ न च मारीभयं क्वापि सर्वत्र सुखभाग्भवेत् ॥ २१ ॥ आयुरारोग्यमैश्वर्यं पुत्रपौत्रादिसंपदः ॥ भवंति सततं तस्य पुस्तकस्यापि पूजनात् ॥ २२ ॥ पार्वत्युवाच ॥ य एष भैरवो नाम आपदुद्धारको मतः ॥ त्वया च कथितो देव भैरवः कल्प उत्तमः ॥ २३ ॥ तस्य नामसहस्राणि प्रयुतान्यर्बुदानि च ॥ सारमुद्धृत्य तेषां वै नामाष्टशतकं वद ॥ २४ ॥ यानि संकीर्तयन्मर्त्यः सर्वदुःखविवर्जितः ॥ सर्वान्कामानवाप्नोति साधकः सिद्धिमेव च ॥ २५ ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि भैरवस्य महात्मनः ॥ आपदुद्धारणस्येह नामाष्टशतमुत्तमम् ॥ २६ ॥ सर्वपापहरं पुण्यं सर्वापद्विनिवारणम् ॥ सर्वकामार्थदं देवि साधकानां सुखावहम् ॥ २७ ॥ सर्वमंगलमांगल्यं सर्वोपद्रवनाशनम् ॥ आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् ॥ २८ ॥ नामाष्टशतकस्यास्य छन्दोऽनुष्टुप् प्रकीर्तितम् ॥ बृहदारण्यको नाम ऋषिर्देवोऽथ भैरवः ॥ २९ ॥ अष्टबाहुस्त्रिनयनं बीजशक्ती समीरिते ॥ ॐ कीलकं शेषमिष्टसिद्धौ तु विनियोजयेत् ॥३०॥ सर्वकामार्थसिद्ध्यर्थं विनियोगः प्रकीर्तितः ॥ आदौ कृत्वा षडंगं च ह्रां बां बीजादिनिर्मितिम्॥३१॥ अंगुष्ठादिकरांतं च यथोक्तं हृदयादिकम् ॥ न्यासं कुर्याच्च विधिवद्भक्त्या भैरवतुष्टये ॥ ३२ ॥ सद्योजातादिभिर्मंत्रैः कनिष्ठिकादिपूर्वकम् ॥ देहांगन्यासकं चैव पूर्वं कुर्याच्च साधकः ॥३३॥ यथाकामनया ध्यात्वा ध्यानं च त्रिविधं यतः ॥ आद्यंते स्तोत्रपाठस्य मूलमन्त्रं जपेन्नरः ॥३४॥ अष्टोत्तरशतं धीमान्यथासंख्यमथापि वा ॥ जपांतेऽप्युत्तरन्यासाः कर्तव्या जपसिद्धये ॥३५॥ एवं न्यासविधिं देवि भैरवस्य महात्मनः ॥ नामाष्टशतकं पश्चाज्जपेदापत्निवारकम् ॥३६॥ स्थानेषु येषु नामानि शृणु मत्प्राणवल्लभे ॥ अथ देहन्यासनामानि ॥ भैरवं मूर्ध्नि विन्यस्य ललाटे भीमदर्शनम् ॥ ३७ ॥ अक्ष्णोर्भूताश्रयं न्यस्य कर्णयोर्भूतनायकम् ॥ नासिकायां त्रिशूलं च जिह्वायां रक्तपं ॥२७॥
न्यसेत् ॥ ३८ ॥ कंठमध्ये नागहारं नागहारोपवीतकम् ॥ क्षेत्रज्ञं करयोर्मध्ये क्षेत्रपालं हृदि न्यसेत् ॥ ३९ ॥ क्षेत्रदं नाभिदेशे तु कट्यां सर्वाघनाशनम् ॥ त्रिनेत्रमूर्वोर्विन्यस्य जंघयो रक्तपायिनम् ॥ ४० ॥ पादयोर्देवदेवेशं सर्वांगे बटुकं न्यसेत् ॥ एवं न्यासविधिं कृत्वा स साक्षाद्भैरवो भवेत् ॥ ४१ ॥ अथातः संप्रवक्ष्यामि अंगुली

न्यासमुत्तमम् ॥ न्यसेद्भैरवमंगुष्ठे तर्जन्यां भीमदर्शनम् ॥४२॥ भूतश्रेष्ठं मध्यमायामनाम्यां भूतनायकम् ॥ कनिष्ठिकायां क्षत्रियं क्षेत्रपालं करद्वये ॥ ४३ ॥ क्षेत्रज्ञं दिग्दिशायां वै भैरवं सर्वतः पुनः ॥ अथांगन्यासाः ॥ भैरवं शिरसि न्यस्य ललाटे भीमदर्शनम् ॥ ४४ ॥ नेत्रयोर्भूतहननं सारमेयानुगं भ्रुवोः ॥ कर्णयोर्भूतनाथं च प्रेतवाहं कपोलयोः ॥४५॥ नासापुटोष्ठयोश्चैव भस्मांगसर्पभूषणम् ॥ अनादिनाथमास्ये च शक्तिहस्तं गले न्यसेत् ॥ ४६ ॥ स्कंधयोर्दैत्यशमनं बाह्वोरतुलतेजसम् ॥ पाण्योः कपालिनं न्यस्य हृदये मुंडमालिनम् ॥ ४७ ॥ शांतं वक्षस्थले न्यस्य स्तनयोः कामचारिणम् ॥ उदरे च सदा तुष्टं क्षेत्रेशं पार्श्वयोस्तथा ॥ ४८ ॥ क्षेत्रपालं पृष्ठदेशे क्षेत्रज्ञं नाभिदेशके ॥ पापौघनाशनं कट्यां बटुकं लिंगदेशके ॥ ४९ ॥ गुदे रक्षाकरं न्यस्य तथोर्वो रक्तपायिनम् ॥ जानुनोर्घुर्घुरारावं जंघयो रक्तपायिनम् ॥ ५० ॥ गुल्फयोः पादुकासिद्धं पादपृष्ठे सुरेश्वरम् ॥ आपादमस्तकं चैव आपदुद्धारकं तथा ॥ ५१ ॥ "ॐ ह्रीं क्ष्मौं व्रौं ह्रीं ॐ स्वाहा आपदुद्धारणभैरवाय नमः ॥" ॥ अनेन व्यापकम् ॥ पूर्वं डमरुहस्तं च दक्षिणे दंडधारिणम् ॥ खड्गहस्तं पश्चिमायां घंटावादिनमुत्तरे ॥ ५२ ॥ आग्नेय्यामग्निवर्णं च नैर्ऋत्यां च दिगंबरम् ॥ वायव्यां सर्वभूतस्थमीशान्यां चाष्टसिद्धिदम् ॥ ५३ ॥ ऊर्ध्वे खेचारिणं न्यस्य पाताले रौद्ररूपिणम् ॥ एवं विन्यस्य देहेषु करांगेषु ततो न्यसेत् ॥ ५४ ॥ रुद्रमंगुष्ठयोर्न्यस्य तर्जन्योस्तु शिखीसखम् ॥ शिवं मध्यमयोर्न्यस्यानामिकयोस्तु त्रिशूलिनम् ॥ ५५ ॥ ब्रह्माणं तु कनिष्ठायां तलयोस्त्रिपुरांतकम् ॥ मांसाशिनं कराग्रे तु करपृष्ठे दिगंबरम् ॥ ५६ ॥ हृदये भूतनाथाय आदिनाथाय मूर्द्धनि ॥ आनन्दपदपूर्वाय नाथायाथ शिखासु च ॥५७॥ सिद्धशाबरनाथाय कवचे विन्यसेत्तथा ॥ सहजानन्दनाथाय न्यसेन्नेत्रत्रये तथा ॥५८॥ श्रीमदानंदनाथाय अस्त्रे चैव प्रयोजयेत् ॥ बीजपूर्वोद्धृतं मन्त्रं न्यासं कुर्याद्विचक्षणः ॥ ५९ ॥ देवीबीजाहृते ब्रूयात्सिद्धिर्भवति नान्यथा ॥ एवं न्यासविधिं कृत्वा ध्यायेच्च तदनंतरम् ॥ ६० ॥ ध्यानं तस्य प्रवक्ष्यामि यथा ध्यात्वा पठेन्नरः ॥ ६१ ॥ अथ त्रिगुणात्मकं ध्यानम् ॥ ॥ शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ॥ नीलजीमूतसंकाशं नीलांजनसमप्रभम् ॥ ६२ ॥ अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥ दंष्ट्राकरालवदनं नूपुरारावसंकुलम् ॥६३॥ भुजङ्गमेखलं देवमग्निवर्णशिरोरुहम् ॥ दिगंबरं कुमारेशं बटुकाख्यं महाबलम् ॥६४॥ खट्वांगमसिपाशं च शूलं दक्षिणभागतः ॥ डमरुं च कपालं च वरदं भुजगं तथा ॥ ६५ ॥ आत्मवर्णसमोपेतं सारमेयसमन्वितम् ॥ ६६ ॥ अथ सात्त्विकं ध्यानम् ॥ वंदे बालं स्फटिकसदृशं कुंडलोद्भासितांगं दिव्याकल्पैर्नवमणिमयैः किंकिणीनूपुराढ्यैः ॥ दीप्ताकारं विशदवदनं सुप्रसन्नं त्रिनेत्रं हस्ताग्राभ्यां बटुकसदृशं शूलदंडोपधानम् ॥ ६७ ॥ अथ राजसं ध्यानम् ॥ उद्यद्भास्करसन्निभं त्रिनयनं रक्तांगरागस्रजं स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ॥ नीलग्रीवमुदारभूषणयुतं शीतांशुखंडोज्ज्वलं

बन्धूकारुणवाससं भयहरं देवं सदा भावये ॥ ६८ ॥ ॥ अथ तामसं ध्यानम् ॥ ध्यायेन्नीलादिकांतं शशि शकलधरं मुंडमालं महेशं दिग्वस्त्रं पिंगकेशं डमरुमथ सृणिं खड्गपाशाभयानि ॥ नागं घंटां कपालं करसर सिरुहैर्बिभ्रतं भीमदंष्ट्रं दिव्याकल्पं त्रिनेत्रं मणिमयविलसत्किंकिणीनूपुराढ्यम् ॥ ६९ ॥ अथ साधारणं ध्यानम् ॥ करकलितकपालः कुंडलीदंडपाणिस्तरुणतिमिरनीलो व्यालयज्ञोपवीती ॥ क्रतुसमयसपर्याविघ्नवि च्छेदहेतुर्जयति बटुकनाथः सिद्धिदः साधकानाम् ॥ ७० ॥ आनीलकुंतलमलक्तकरक्तवर्णं मौनीकृतं कृतमनोज्ञ मुखारविंदम् ॥ कल्याणकीर्तिकमनीयकपालपाणिं वंदे महाबटुकनाथमभीष्टसिद्ध्यै ॥ ७१ ॥ आनम्रसर्वगी र्वाणशिरोभृगांगसंगिनम् ॥ भैरवस्य पदांभोजं भूयोऽस्य नौमि भूतये ॥ ७२ ॥ ध्यात्वा जपेत्सुसंहृष्टः सर्वान्कामानवाप्नुयात् ॥ आयुरारोग्यमैश्वर्यं सिद्धार्थं विनियोजयेत् ॥ ७३ ॥ साधकः सर्वलोकेषु सत्यं सत्यं न संशयः ॥ लक्षवारं जपेन्मंत्रं होमं कुर्याद्यथाविधि ॥ ७४ ॥ ॐ अस्य श्रीबटुकभैरव स्तोत्रमंत्रस्य बृहदारण्यक ऋषिः ॥ अनुष्टुप् छन्दः ॥ श्रीबटुकभैरवो देवता ॥ अष्टबाहुमिति बीजम् ॥ त्रिनयनमिति शक्तिः ॥ प्रणवः कीलकम् ॥ ममाभीष्टसिद्ध्यर्थे जपे विनियोगः ॥ बृहदारण्यकऋषये नमः शिरसि ॥ अनुष्टुप्छंदसे नमः मुखे ॥ बटुकभैरवदेवतायै नमः हृदये ॥ अष्टबाहुमिति बीजाय नमः गुह्ये ॥ त्रिन यनमिति शक्तये नमः पादयोः ॥ ॐ कीलकाय नमः नाभौ ॥ ॐ विनियोगाय नमः सर्वांगे ॥ ॐ ह्रां बां ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं बीं तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ तर्ज० ॥ ॐ ह्रूं बूं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ मध्यमा० ॥ ॐ ह्रैं बैं वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ अनामि० ॥ ॐ ह्रौं बौं सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः ॥ कनिष्ठि० ॥ ॐ ह्रः बः पंचवक्राय महादेवाय नमः ॥ करतलकरपृष्ठाभ्यां नमः ॥ अथ हृदयादिन्यासः ॥ ॐ ह्रां बां ईशानः० हृदयाय नमः ॥ ॐ ह्रीं बीं तत्पुरुषाय० शिरसे स्वाहा ॥ ॐ ह्रूं बूं अघोराय० शिखायै० ॥ ॐ ह्रैं बैं वामदेवाय० कवचाय हुम् ॥ ॐ ह्रौं बौं सद्योजाताय० नेत्रत्रयाय वौषट् ॥ ॐ ह्रः बः पंचवक्राय महादेवाय० नमः अस्त्राय फट् ॥ अथ देहन्यासः ॥ ॐ ह्रीं भैरवाय नमः मूर्ध्नि ॥ ॐ ह्रीं भीमदर्शनाय नमः ललाटे ॥ ॐ ह्रीं भूताश्रयाय० नेत्रयोः ॥ ॐ ह्रीं भूतनायकाय० कर्णयोः ॐ ह्रीं त्रिशूलाय० नासिकायाम् ॥ ॐ ह्रीं रक्तपाय० जिह्वा याम् ॥ ॐ ह्रीं नागहारनागयज्ञोपवीतिने० कंठमध्ये ॥ ॐ ह्रीं क्षेत्रज्ञाय० करयोः ॥ ॐ ह्रीं क्षेत्रपालाय०

हृदये ॥ ॐ ह्रीं क्षेत्रदाय० नाभौ ॥ ॐ ह्रीं सर्वाघनाशनाय० कट्याम् ॥ ॐ ह्रीं त्रिनेत्राय० ऊर्वोः ॥ ॐ ह्रीं रक्तपायिने० जंघयोः ॥ ॐ ह्रीं देवदेवेशाय० सर्वांगे ॥ अथ करन्यासः ॐ ह्रीं भैरवाय० अंगुष्ठा० ॥ ॐ ह्रीं भीमदर्शनाय० तर्ज० ॥ ॐ ह्रीं भूतश्रेष्ठाय० मध्य० ॥ ॐ ह्रीं भूतनायकाय० अना० ॥ ॐ ह्रीं क्षत्रियाय० कनि० ॥ ॐ ह्रीं क्षेत्रपालाय० करत० ॥ ॐ ह्रीं क्षेत्रज्ञाय० दिग्दिशायाम् ॥ ॐ भैरवाय० सर्वांगे ॥ अथांगन्यासः ॥ ॐ ह्रीं भैरवाय शिरसि ॐ ह्रीं भीमदर्शनाय० ललाटे ॥ ॐ ह्रीं भूतहननाय० नेत्रयोः ॥ ॐ ह्रीं सारमेयानुगाय० भ्रुवोः ॥ ॐ ह्रीं भूतनाथाय० कर्णयोः ॥ ॐ ह्रीं प्रेतवाहकाय० कपोलयोः ॥ ॐ ह्रीं भस्मांगाय० नासापुटे ॥ ॐ ह्रीं सर्पभूषणाय० ओष्ठयोः ॥ ॐ ह्रीं आदिनाथाय० मुखे ॥ ॐ ह्रीं शक्तिहस्ताय० गले ॥ ॐ ह्रीं दैत्यशमनाय० स्कंधयोः ॥ ॐ ह्रीं अतुलतेजसे० बाह्वोः ॥ ॐ ह्रीं कपालिने० करयोः ॐ ह्रीं मुंडमालिने नमः हृदये ॥ ॐ ह्रीं शांताय० वक्षस्थले ॥ ॐ ह्रीं कामचारिणे नम स्तनयोः ॥ ॐ ह्रीं सदातुष्टाय० उदरे ॥ ॐ ह्रीं क्षेत्रेशाय० पार्श्वयोः ॥ ॐ ह्रीं क्षेत्रपालाय० पृष्ठे ॥ ॐ ह्रीं क्षेत्रज्ञाय० नाभौ ॥ ॐ ह्रीं पापौघनाशनाय० कट्याम् ॥ ॐ ह्रीं बटुकाय० लिंगे ॥ ॐ ह्रीं रक्षाकराय० गुदे ॥ ॐ ह्रीं रक्तलोचनाय० ऊर्वोः ॥ ॐ ह्रीं घुर्घुराय० जानुनोः ॥ ॐ ह्रीं रक्तपायिने० जंघयोः ॐ ह्रीं सिद्धपादुकाय० गुल्फयोः ॥ ॐ ह्रीं सुरेश्वराय पादपृष्ठे । ॐ ह्रीं आपदुद्धारकाय० आपादतलमस्तकपर्यंतं न्यसेत् ॥ ॐ ह्रीं क्ष्म्रौं बौं ह्रीं ॐ स्वाहा आपदुद्धारणभैरवाय नमः ॥ अनेन सर्वांगे व्यापकं कुर्यात् ॥ अथ दिङ्न्यासः ॥ ॐ ह्रीं डमरुहस्ताय नमः पूर्वे ॥ ॐ ह्रीं दंडधारिणे नमः द० ॥ ॐ ह्रीं खड्गहस्ताय० प० ॥ ॐ ह्रीं घंटावादिने० उ० ॥ ॐ ह्रीं अग्निवर्णाय आ० ॥ ॐ दिगंबराय० नै० ॥ ॐ ह्रीं सर्वभूतस्थाय० वा० ॥ ॐ ह्रीं अष्टसिद्धिदाय० ई० ॥ ॐ ह्रीं खेचारिणे० ऊर्ध्वम् ॥ ॐ ह्रीं रौद्ररूपिणे पाताले ॥ अथ कर० ॥ ॐ ह्रीं रुद्राय नमः अंगु० ॥ ॐ ह्रीं शिखीसखाय नमः तर्ज० ॥ ॐ ह्रीं शिवाय नमः मध्य० ॥ ॐ ह्रीं त्रिशूलिने० अना० ॥ ॐ ह्रीं ब्रह्मणे नमः कनि० ॥ ॐ ह्रीं त्रिपुरांतकाय नमः करतलयोः ॥ ॐ ह्रीं मांसाशिने नमः कराग्रेषु ॥ ॐ ह्रीं दिगंबराय नमः करपृष्ठयोः ॥ अथ षडंगन्यासः ॥ ॐ ह्रीं भूतनाथाय न० हृदये ॥ ॐह्रीं आदिनाथाय० मूर्धनि ॥ ॐह्रीं आनंदनाथाय० शि० ॥ ॐह्रीं सिद्धशाबरनाथाय० क० ॥ ॐ ह्रीं सहजानंदनाथाय० नेत्रत्र० ॥ ॐ ह्रीं श्रीआनंदनाथाय० अस्त्रा० ॥ ॐ अस्य श्रीबटुकभैरवमंत्रस्य बृहदारण्यक ऋषिः ॥ अनुष्टुप् छंदः ॥ श्रीबटुकभैरवो देवता ॥ बं बीजम् ॥ ह्रीं शक्तिः ॥ ॐकीलकम् ॥ श्रीबटुकभैरवप्रसादसिद्ध्यर्थं स्तोत्रादौ अष्टोत्तरशतमूलमंत्रजपे विनियोगः ॥ अथ मंत्रन्यासः ॥ ॐ ह्रीं अंगुः ॥ ॐ बटुकाय न० ॐ आपदुद्धारणाय० म० ॐकुरुकुरु अ० ॥ अथ सकलमनोरथप्राप्त्यर्थमिदं ध्यानम् ॥ शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ॥ नीलजीमूतसंकाशं नीलांजनसमप्रभम् ॥ ७८ ॥ अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥

दंष्ट्राकरालवदनं नूपुरारावसंकुलम् ॥ ७६ ॥ भुजंगमखिलं देवमग्निवर्णशिरोरुहम् ॥ दिगंबरं कुमारेशं बटुकाख्यं महाबलम् ॥ ७७ ॥ खट्वांगमसिपाशं च शूलं दक्षिणभागतः ॥ डमरुं च कपालं च वरदं भुजगं तथा ॥ आत्मवर्णसमोपेतं सारमेयसमन्वितम् ॥ ७८ ॥ एवं ध्यात्वा ॥ "ॐ ह्रीं भैरव भयकरहर मां रक्षरक्ष हुं फट् स्वाहा ॥" इति मंत्रेण प्रार्थयित्वा पूर्वोक्तयंत्रपीठे आवाहनादिमुद्राः प्रदर्शयेत् ॥ षोडशोपचारैरभ्यर्चयेत् ॥ अथ बलिदानम् ॥ शुद्धासन उपविश्य ॥ ह्रां ह्रीं कुं एभिर्बीजैः त्रिभिराचम्य मूलेन प्राणायामं कृत्वा देशकालौ संकीर्त्य ॥ ममामुकफलावाप्तये श्रीबटुकप्रीतये बलिदानमहं करिष्ये ॥ इति संकल्प्य ॥ गणपतिं दुर्गां रक्तैश्चंदनाक्षतपुष्पै रभ्यर्च्य देवस्याग्रे त्रिकोणं चतुरस्रं मंडलं कृत्वा तत्र गंधाद्यैरभ्यर्च्य पात्रस्थं कवलाकारं संपादितं बलिं निधाय गंधपुष्पाभ्यां मूलांते बलिरूपाय नमः इति बलिं संपूज्य देवं तत्र संचिंत्य संपूज्य हस्ते जलमादाय मूलमंत्र मुच्चार्य जलं भूमौ निक्षिप्य स्वहस्ते बलिमादाय देवाय समर्पयेत् ॥ ततः संकल्पं कुर्यात् ॥ मम सकलकामना सिद्ध्यर्थं श्रीबटुकभैरवस्तोत्रस्यैकादशसहस्रपुरश्चरणांगत्वेन प्रतिस्तोत्रं मूलमंत्रस्योत्तरशतसंख्याजपसंपुटितपं चाशत्संख्यापाठमहं करिष्ये वा यथाशक्त्यैकप्रभृतिपाठमहं करिष्ये ॥ मूलमंत्रमष्टोत्तरशतवारं जपेत् ॥ मूलमंत्रः ॥ "ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरुकुरु बटुकाय ह्रीं ॐ ॥" एवं अष्टोत्तरशतमूलमंत्रजपकृ तेन श्रीबटुकभैरवः प्रीयताम् ॥ बटुकाय नमस्कृत्य पंचोपचारैः संपूज्य स्तोत्रं पठेत् ॥ ॐ ह्रीं भैरवो भूतनाथश्च भूतात्मा भूतभावनः ॥ क्षेत्रदः क्षेत्रपालश्च क्षेत्रज्ञः क्षत्रियो विराट् ॥ ७९ ॥ श्मशानवासी मांसाशी खर्पराशी स्मरांतकृत् ॥ रक्तपः पानपः सिद्धः सिद्धिदः सिद्धसेवितः ॥ ८० ॥ कंकालः कालशमनः कलाकाष्ठातनुः कविः ॥ त्रिनेत्रो बहुनेत्रश्च तथा पिंगललोचनः ॥ ८१ ॥ शूलपाणिः खड्गपाणिः कंकाली धूम्रलोचनः ॥ अभीरुर्भैरवीनाथो भूतपो योगिनीपतिः ॥ ८२ ॥ धनदो धनहारी च धनवान्प्रीतिभावितः ॥ नागहारो नागपाशो व्योमकेशः कपालभृत् ॥ ८३ ॥ कालः कपालमाली च कमनीयः कलानिधिः ॥ त्रिलोचनो ज्वलन्नेत्रस्त्रिशिखी च त्रिलोकपः ॥ ८४ ॥ त्रिनेत्रतनयो डिंभः शांतः शांतजनप्रियः ॥ बटुको बटुवेशश्च खट्वांगवरधारकः ॥ ८५ ॥ भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः ॥ धूर्तो दिगंबरः शूरो हरिणः पांडुलोचनः ॥ ८६ ॥ प्रशांतः शांतिदः सिद्धः शंकरः प्रियबांधवः ॥ अष्टमूर्तिर्निधीशश्च ज्ञानचक्षुस्तपोमयः ॥ ८७ ॥ अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः ॥ भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ॥ ८८ ॥ कंकालधारी मुंडी च नागयज्ञोपवीतवान् ॥ जृम्भणो मोहनः स्तंभी मारणः क्षोभणस्तथा ॥ ८९ ॥ शुद्धनीलांजनप्रख्यो दैत्यहा मुंडभूषितः ॥ बलिभुग्बलिभुङ्नाथो बालो बालपराक्रमः ॥ ९० ॥ सर्वापत्तारणो दुर्गो दुष्टभूतनिषेवितः ॥ कामी कलानिधिः कांतः कामिनीवशकृद्वशी ॥ ९१ ॥ सर्वसिद्धिप्रदो वैद्यो प्रभुर्विष्णुरितीव हि ॥ अष्टोत्तरशतं नाम्नां

भैरवस्य महात्मनः ॥ ९२ ॥ मया ते कथितं देवि रहस्यं सर्वकामदम् ॥ य इदं पठति स्तोत्रं नामाष्टशतमुत्तमम्॥
॥ ९३ ॥ न तस्य दुरितं किंचिन्न च भूतभयं तथा ॥ न च मारीभयं तस्य ग्रहराजभयं तथा ॥९४॥ न शत्रुभ्यो
भयं क्वापि प्राप्नुयान्मानवः क्वचित् ॥ पातकानां भयं नैव पठेत्स्तोत्रमनुत्तमम् ॥ ९५ ॥ मारीभये राजभये
तथा चौराग्निजे भये ॥ उत्पत्तिके महाघोरे तथा दुःस्वप्नदर्शने ॥९६॥ बंधने च तथा घोरे पठेत्स्तोत्रमनन्यधीः ॥
सर्वं प्रशमनं याति भयं भैरवकीर्तनात् ॥ ९७ ॥ एकादशसहस्रं तु पुरश्चरणमुच्यते ॥ यस्त्रिसंध्यं पठेदेवि संव
त्सरमतंद्रितः ॥९८॥ स सिद्धिं प्राप्नुयादिष्टां दुर्लभामपि मानवः ॥ षण्मासं भूमिकामस्तु जपित्वा प्राप्नुयान्म
हीम ॥ ९९ ॥ राजशत्रुविनाशाय जपेन्मासाष्टकं पुनः ॥ रात्रौ वारत्रयं चैव नाशयत्येव शात्रवान् ॥ १०० ॥ जपे
न्मासत्रयं मर्त्यो राजानं वशमानयेत् ॥ धनार्थी च सुतार्थी च दारार्थी यस्तु मानवः ॥ १०१ ॥ जपेन्मासत्रयं
देवि वारमेकं तथा निशि ॥ धनं पुत्रं तथा दारान्प्राप्नुयान्नात्र संशयः ॥१०२॥ रोगी रोगात्प्रमुच्येत बद्धो मुच्येत
बंधनात् ॥ भीतो भयात्प्रमुच्येत देवि सत्यं न संशयः ॥ १०३ ॥ निगडैश्चापि बद्धो यः कारागारे निपातितः ॥
शृंखलाबंधनं प्राप्तं पठेच्चैव दिवानिशम् ॥ १०४ ॥ यं यं चिंतयते कामं तं तं प्राप्नोति निश्चितम् ॥ अप्रकाश्यं
परं गुह्यं न देयं यस्य कस्यचित् ॥ १०५ ॥ सुकुलीनाय शांताय ऋजवे दंभवर्जिते ॥ दद्यात्स्तोत्रमिदं पुण्यं
सर्वकामफलप्रदम् ॥ १०६ ॥ इति श्रुत्वा ततो देवी नामाष्टशतमुत्तमम् ॥ जजाप परया भक्त्या सदा सर्वे
श्वरेश्वरि ॥ १०७ ॥ भैरवस्य प्रहृष्टोऽभूत्सर्वलोकमहेश्वरः ॥ वरं ददाति भक्तेभ्यो पठेत्स्तोत्रमनन्यधीः ॥ १०८ ॥
संतोषं परमं प्राप्य भैरवस्य महात्मनः ॥ १०९ ॥ वारं वारं भुवनजननी प्रोच्यते साधुवादः सत्यं सत्यं
जगति सकले भैरवो देव एकः ॥ यां यां सिद्धिं भुवनजठरे कामयेन्मानवो यस्तां तां सिद्धिं वितरति
सदा भैरवः सुप्रसन्नः ॥ ११० ॥ पाणिभ्यां परितः प्रपीड्य सुदृढं निश्चोत्य निश्चोत्य च ब्रह्मांडं सकलं
प्रचालितरसालोच्चैः फलाभं मुहुः ॥ पायंपायमपाययत्रिजगति उन्मत्तवत्तै रसैर्नृत्यंस्तांडवमंबरेण
शिरसा पायान्महाभैरवः ॥ १११ ॥ बिभ्राणः शुभ्रवर्णं द्विगुणनवभुजं पंचवक्त्रं त्रिनेत्रं ज्ञानं मुद्रेंद्रशस्त्रं
सविषमसुतकं (?) शंखभैषज्यचापम् ॥ शूलं खट्वांगबाणान्डमरुमसिगदावह्निमारोग्यमालामिष्टाभीतिं च
दोर्भिर्जयति खलु महाभैरवः सर्वसिद्ध्यै ॥ ११२ ॥ क्वाकाशः क्व समीरणः क्व दहनः क्वापश्च विश्वं
भरः क्व ब्रह्मा क्व जनार्दनः क्व तरणिः क्वेंदुश्च देवासुराः ॥ कल्पांतेभदिशाटनप्रमुदितः श्रीसिद्धयोगीश्वरो
क्रीडानाटकनायको विजयते देवो महाभैरवः ॥ ११३ ॥ लिखित्वा परया भक्त्या भैरवस्तोत्रमुत्तमम् ॥ अष्टानां
ब्राह्मणानां च देयं पुस्तकमादरात् ॥ ११४ ॥ यान्यान्समीहते कामांस्तांस्तान्प्राप्नोत्यसंशयम् ॥ इह
लोके सुखं प्राप्य पुस्तकस्य प्रसादतः ॥ शिवलोकमनु प्राप्य शिवेन सह मोदते ॥ ११५ ॥ लिखित्वा भूर्जपत्रे

तु त्रिलोहपरिवेष्टितम् ॥ सौम्ये च वस्त्रवसने कर्पटे च सुशोभने ॥११६॥ करे बाहौ गले कट्यां मूर्ध्नि त्रिलोह गोपितम् ॥ यस्तु धारयते स्तोत्रं सर्वत्र जयमाप्नुयात् ॥ ११७॥ इति श्रीह० बृ० ध० उपा० स्त० श्रीबटुकभैरवोपासनाध्याये रुद्रयामलोक्तापदुद्धारकश्रीबटुकभैरवस्तोत्रनिरूपणं नाम प्रकरणमेकादशम् ॥ ॥ ११ ॥ छ ॥ ॥ अथ श्रीबटुकभैरवाष्टोत्तरशतनामावलिः ॥ ॥ ॐ अस्य श्रीबटुकभैरवाष्टोत्तरशतनाम मंत्रस्य बृहदारण्यक ऋषिः । अनुष्टुप् छंदः । श्रीबटुकभैरवो देवता । बं बीजम् । ह्रीं शक्तिः । प्रणवः कीलकम् । श्रीबटुकभैरवप्रीत्यर्थम् एभिर्द्रव्यैः पृथङ्नाममंत्रेण हवने विनियोगः । तत्रादौ ह्रां बां इति करन्यासं हृदयादिन्यासं च कृत्वा ध्यात्वा गंधाक्षतैः संपूज्य हवनं कुर्यात् ॥ १ ॐ भैरवाय नमः २ ॐ भूतनाथाय नमः ३ ॐ भूतात्मने नमः ४ ॐ भूतभावनाय नमः ५ ॐ क्षेत्रज्ञाय नमः ६ ॐ क्षेत्रपालय नमः ७ ॐ क्षेत्रदाय नमः ८ ॐ क्षत्रियाय नमः ९ ॐ विराजे नमः १० ॐ श्मशानवासिने नमः ११ ॐ मांसाशिने नमः १२ ॐ खर्पराशिने नमः १३ ॐ स्मरांतकाय नमः १४ ॐ रक्तपाय नमः १५ ॐ पानपाय नमः १६ ॐ सिद्धाय नम १७ ॐ सिद्धिदाय नमः १८ ॐ सिद्धिसेविताय नमः १९ ॐ कंकालाय नमः २० ॐ कालशमनाय नमः २१ ॐ कलाकाष्ठाय नमः २२ ॐ तनये नमः २३ ॐ कवये नमः २४ ॐ त्रिनेत्राय नमः २५ ॐ बहुनेत्रयाय नमः २६ ॐ पिंगल लोचनाय नमः २७ ॐ शूलपाणाये नमः २८ ॐ खड्गपाणये नमः २९ ॐ कपालिने नमः ३० ॐ धूम्र लोचनाय नमः ३१ ॐ अभीरवे नमः ३२ ॐ भैरवीनाथाय नमः ३३ ॐ भूतपाय नमः ३४ ॐ योगिनी पतये नमः ३५ ॐ धनदाय नमः ३६ ॐ धनहारिणे नमः ३७ ॐ धनवते नमः ३८ ॐ प्रीतिवर्धनाय नमः ३९ ॐ नागहाराय नमः ४० ॐ नागपाशाय नमः ४१ ॐ व्योमकेशाय नमः ४२ ॐ कपालभृते नमः ४३ ॐ कालाय नमः ४४ ॐ कपालमालिने नमः ४५ ॐ कमनीयाय नमः ४६ ॐ कलानिधये नमः ४७ ॐ त्रिलोचनाय नमः ४८ ॐ ज्वलन्नेत्राय नमः ४९ ॐ त्रिशिखिने नमः ५० ॐ त्रिलोकषाय नमः ५१ ॐ त्रिनेत्रतनयाय नमः ५२ ॐ डिंभाय नमः ५३ ॐ शांताय नमः ५४ ॐ शांतजनप्रियाय नमः ५५ ॐ बटुकाय नमः ५६ ॐ बटुवेशाय नमः ५७ ॐ खट्वांगधारकाय नमः ५८ ॐ यताध्यक्षाय नमः ५९ ॐ पशुपतये नमः ६० ॐ भिक्षुकाय नमः ६१ ॐ परिचारकाय नमः ६२ ॐ धूर्ताय नमः ६३ ॐ दिगंबराय नमः ६४ ॐ शूराय नमः ६५ ॐ हरिणे नमः ६६ पांडुलोचनाय नमः ६७ ॐ प्रशांताय नमः ६८ ॐ शांतिदाय नमः ६९ ॐ सिद्धाय नमः ७० ॐ शंकरप्रियबांधवाय नमः ७१ ॐ अष्टमूर्तये नमः ७२ ॐ निधीशाय नमः ७३ ॐ ज्ञानचक्षुषे नमः ७४ ॐ तपोमयाय नमः ७५ ॐ अष्टाधाराय नमः ७६ ॐ षडाधाराय नमः ७७ ॐ सर्पयुक्ताय नमः ७८ ॐ शिखिसखाय नमः ७९ ॐ भूधराय नमः ८० ॐ भूधराधीशाय नमः

८१ ॐ भूपतये नमः ८२ ॐ भूधरात्मजाय नमः ८३ ॐ कंकालधारिणे नमः ८४ ॐ मुंडिने नमः ८५ ॐ नागयज्ञोपवीतवते नमः ८६ ॐ जृम्भणाय नमः ८७ ॐ मोहनाय नमः ८८ ॐ स्तंभिने नमः ८९ ॐ मरणाय नमः ९० ॐ क्षोभणाय नमः ९१ ॐ शुद्धनीलांजनप्रख्याय नमः ९२ ॐ दैत्यघ्ने नमः ९३ ॐ मुंडभूषिताय नमः ९४ ॐ बलिभुजे नमः ९५ ॐ बलिभुङ्नाथाय नमः ९६ ॐ बालाय नमः ९७ ॐ बालपराक्रमाय नमः ९८ ॐ सर्वापत्तारणाय नमः ९९ ॐ दुर्गाय नमः १०० ॐ दुष्टभूतनिषेविताय नमः १०१ कामिने नमः १०२ ॐ कलानिधये नमः १०३ ॐ कांताय नमः १०४ ॐ कामिनीवशकृद्वशिने नमः १०५ ॐ सर्वसिद्धिप्रदाय नमः १०६ ॐ वैद्याय नमः १०७ ॐ प्रभवे नमः १०८ ॐ विष्णवे नमः ॥ इति बटुकोपासनाध्याये बटुकभैरवाष्टोत्तरशतनामनिरूपणं नाम प्रकरणं द्वादशम् ॥ १२ ॥ श्रीबटुकभैरवपटलम् ॥ दृष्ट्वा तंत्राण्यनेकानि हरिकृष्णेन धीमता ॥ श्रीमद्बटुकनाथस्य पटलं वक्ष्यतेऽधुना ॥ १ ॥ तत्रादौ शिवागमसारे ॥ कदाचिद्गिरिजा शंभुं पप्रच्छोपासनाविधिम् ॥ येनेदं सर्वलोकानां मनेप्सितफलं भवेत् ॥ ॥ २ ॥ श्रीपार्वत्युवाच ॥ प्राणनाथ जगन्नाथ जगदादिजगन्मय ॥ शंभो शंकर देवेश बटुकाराधनं वद ॥ ३ ॥ एकादशसहस्रं तु भजनं हि त्वयोदितम् ॥ विधिस्तस्य विशेषेण वहि त्वं शंकराधुना ॥ ४ ॥ शिव उवाच ॥ सम्यक् पृष्टं त्वया देवि लोकदुःखविमोचनम् ॥ मया बटुकरूपं हि धृतं सर्वसुखावहम् ॥ ५ ॥ अन्ये देवास्तु कालेन प्रसन्नाः संभवंति हि ॥ बटुकः सेवितः सद्यः प्रसीदति ध्रुवं शिवे ॥ ६ ॥ दुःखे च सेवितः शीघ्रं दुखं नाशयते क्षणात् ॥ सुखे च सेवितो नित्यं सुखं वर्द्धयते बहु ॥ ७ ॥ तस्मात्सेव्यो नरैश्चायं सर्वकामफलाय वै ॥ सेवोपायं प्रवक्ष्यामि यथा सिद्धिर्भवेद्ध्रुवम् ॥ ८ ॥ तं तं विधिं च ते वच्मि यं यं कृत्वा नरः शुचिः ॥ नानाविधं फलं प्राप्य विजयी जायते सदा ॥ ९ ॥ ब्राह्मं मुहूर्त्तं संप्राप्य समुत्थाय गुरुं स्मरेत् ॥ स्वीयं नित्यविधिं कृत्वा बटुकोपासनं चरेत् ॥ १० ॥ शुचौ देशे स्वयं स्थित्वा पद्मासनं विधाय च ॥ पीठे पलाशजे वाथ शमिजे ताम्रजे शिवे ॥ ११ ॥ जांबवे वेतसे जाते स्थित्वा वै जपमाचरेत् ॥ अथ मृगत्वचं श्रेष्ठं व्याघ्रचर्म सुशोभनम् ॥ १२ ॥ ऊर्णामयं विचित्रं वा स्थापयेत्तु पुरस्तदा ॥ सप्तधातुमये पीठे ताम्रजे वा पटे शुभे ॥ १३ ॥ संस्थाप्य तत्र तद्यंत्रं ध्यात्वा तत्र बटुं प्रिये ॥ एतद्यंत्रं प्रवक्ष्यामि यंत्रे देवं च पूजयेत् ॥ १४ ॥ त्रिकोणं च पुरा कृत्वा षट्कोणं च ततो न्यसेत् ॥ ततश्च वलयं कृत्वा चतुष्कोणं ततश्चरेत् ॥ १५ ॥ मध्यदलं समारभ्य मंत्राक्षराणि पूरयेत् ॥ उपरीतानि सव्येन सर्वाणि पूरयेत्क्रमात् ॥ १६ ॥ उर्वरीतदले तत्र लक्ष्मीबीजं न्यसेत्तदा ॥ दिक्पालांश्च समारोप्य कोणेऽष्टभैरवं न्यसेत् १७॥ एवं यन्त्रं च संपूज्य स्वस्थो भूत्वा जपेन्नरः ॥ अथात्र विशेषोऽग्रे चास्ति ॥ आपदुद्धारमंत्रस्य मूलविद्यां शृणु प्रिये ॥ १८ ॥ प्रणवं पूर्वमु

द्धृत्य देवीप्रणवमुद्धरेत् ॥ बटुकायेति वै पश्चादापदुद्धारणाय च ॥ १९ ॥ कुरु द्वय ततः पश्चाद्बटुकाय पुनर्व
देत् ॥ देवीप्रणवमुद्धृत्य मंत्रोद्धारमिमं प्रिये ॥ २० ॥ एकविंशतिवर्णास्तु मंत्रे सत्यं प्रकाशिताः ॥ लक्षमेकं
जपन्मंत्रं होमं कुर्याद्यथाविधि ॥ २१ ॥ मंत्राक्षराणां संख्याकैस्तंतुभिर्ब्रह्मसूत्रजैः ॥ वर्त्तिं कृत्वा घृतेनैव दीपं
तत्र प्रदापयेत् ॥ २२ ॥ तैलेन वा प्रकुर्वीत दीपदानविधानतः ॥ बलिं न्यासविधिं कृत्वा ध्यानं कुर्याद्यथोक्तवत्
॥ २३ ॥ यथाकामं तथा ध्यानं कारयेत्साधकोत्तमः ॥ क्रूरकार्येषु सर्वेषु ध्यानं वै तामस स्मृतम् ॥ २४ ॥
वश्ये विद्वेषणे स्तंभे राजसं ध्यानमीरितम् ॥ सात्त्विकं शुभकार्येषु ध्यानभेदः समीरितः ॥ २५ ॥ बालसूर्यां
शुसंकाशं राजसं ध्यानमुच्यते ॥ सात्त्विकं श्वेतवर्णं च कृष्णं तामसमुच्यते ॥ २६ ॥ सर्वकामार्थसिद्ध्यर्थं राजसं
ध्यानमुच्यते ॥ सात्त्विकं मुक्तिदं प्रोक्तं शोकनाशाय तामसम् ॥ २७ ॥ चौरशत्रुक्षयकरं विषप्रलयनाशनम् ॥ ग्रह
भूतपिशाचानां सर्वविघ्नविनाशनम् ॥ २८ ॥ एवं ध्यात्वा विशेषेण कृष्णवर्णं प्रशस्यते ॥ त्रिनेत्रं रक्तवर्णं च वरदा
भयहस्तकम् ॥२९॥ सव्ये त्रिशूलमभयं कपालं वरमेव च ॥ रक्तवस्त्रपरीधानं रक्तमाल्यानुलेपनम् ॥३०॥ नील
ग्रीवं च सौम्यं च सर्वाभरणभूषितम् ॥ इति तामसम् ॥ राजसं सात्त्विकं चैव ध्यात्वा मृत्युंजयो भवेत् ॥ ३१ ॥
तुषारकर्णिकाभासं मायारूपमनंतकम् ॥ मूर्ध्नि खंडेंदुशकलं त्रिनेत्रं शांतलोचनम् ॥ ३२ ॥ सर्वकारणकर्तारं
द्विभुजं रत्नभूषितम् ॥ कपालं वामहस्ते च सूक्ष्मदंडं च दक्षिणे ॥ ॥ ३३ ॥ पादनूपुरसंयुक्तं छिन्नशीर्षविभूषितम् ॥
सर्पमालासमायुक्त हस्तोरुस्थूलजानुषु ॥ ३४ ॥ आंत्रमालासमायुक्तं सर्वाभरणभूषितम् ॥ एवं ध्यात्वा जपेद्देवं
सर्वमृत्युंजयो भवेत ॥३५॥ सर्वकामप्रदातारं सर्वयोगफलप्रदम् ॥ सर्वज्ञानस्य संप्राप्तिं सात्त्विकं चोत्तमं भवेत् ॥
॥ ३६ ॥ इति राजसम् ॥ श्वेतवर्णं चतुर्बाहुं जटामुकुटधारिणम् ॥ भुजंगपाशहस्त च हस्ते दंडकमंडलुम् ॥३७॥
शुक्लयज्ञोपवीत च शुक्लकौपीनवाससम् ॥ शुक्लवस्त्रपरीधानं श्वेतमालानुलेपनम् ॥ ३८ ॥ त्रिनेत्रं नीलकंठं च मुक्ता
भरणभूषितम् ॥ विद्याकामो मुक्तिकामो ध्यायेच्चैव विशेषतः ॥ ३९ ॥ वर्णेन नीलमेवाभं मुक्तकेशं त्रिनेत्रकम् ॥
दिगंबरं च रौद्रं च शिरोमालाविभूषितम् ॥४०॥ किंकणीमालया युक्तं भीमरूपं भयापहम् ॥ नागं पाशं च घंटां
च वरदं वामहस्तके ॥४१॥ खड्गं त्रिशूलडमरूमभयं दक्षिणे करे ॥ सुशब्दं भीमनादं च सर्वपुष्पैरलंकृतम् ॥४२॥
सर्वाभरणकर्त्तारं सर्वव्याधिविनाशनम् ॥ अन्ये वै ध्यानभेदाश्च स्तवराजे प्रकीर्तिताः ॥४३॥ कोटिशः कोटिप्रदे ॥
पूर्वोक्तस्य च मंत्रस्य बृहदारण्यको ऋषिः ॥ अनुष्टुप् छंद इत्युक्तं भैरवो देवता शिवे ॥४४॥ शक्तिबीजं वशक्तिश्च
आकीलकमुदाहृतम् ॥ आद्यक्षरयुगं देवि पंचह्रस्वान्वितं कुरु ॥४५॥ सत्त्वादिप्रातिलोम्येन नपुंसकविवर्जितम् ॥
एतद्बीजद्वयाद्यास्तु न्यस्तव्याः पंचमूर्त्तयः ॥ ४६ ॥ अंगुष्ठादिष्वंगुलीषु मूर्द्धास्यहृदयेषु च ॥ सगुह्यचरणेष्वेवं
मूर्द्धास्ये दक्षकर्णके ॥४७॥ वामकर्णे च चूडायस्तूर्ध्वपूवातकोत्तमः ॥ पश्चिमेऽपि च वक्त्रेषु मूर्तयस्ता महेश्वरि॥४८॥

ईशानाख्यस्तत्पुरुषोऽघोरो देवि तृतीयकः ॥ वामदेवश्चतुर्थः स्यात्सद्योजातस्तु पंचमः ॥ ४९ ॥ पुनराद्यवर्णयुगलं षड्दीर्घस्वरभेदितम् ॥ कृत्वा तैस्तु षडंगानि जातियुक्तानिकल्पयेत् ॥ ५० ॥ रुद्रयामले ॥ देव्युवाच ॥ देवदेव जगन्नाथ शंभो त्रैलोक्यनायक ॥ भैरवस्य विधिर्भूयो ममाचक्ष्व महामते ॥ ५१ ॥ येन कार्याणि सिद्ध्यंति साधकानां निरंतरम् ॥ सुगोप्यमपि देवेश विधिं प्रब्रूहि शंकर ॥ ५२ ॥ यतोऽहं ते प्रिया देव सदा वर्त्ते निरंतरम् ॥ ततः कृपां समाधाय विधिं कथय शोभनम् ॥५३॥ शिव उवाच ॥ शृणु देवि प्रवक्ष्यामि बटुकस्य महात्मनः ॥ विधानं परमं गोप्यं ब्रह्मादीनां सुदुर्लभम् ॥ ५४ ॥ मंत्रेणैव सुसंक्षेपात्कथयिष्यामि वल्लभे ॥ येन विज्ञानमात्रेण त्रैलोक्यं साधयेत्सुधीः ॥ ५५ ॥ एकदा देवदेवेशि तपसे मंदराचलम् ॥ गतोऽहं परमानंदान्मूलप्रकृतिमीश्वरीम् ॥ ५६ ॥ चक्रे परमसन्तुष्टां तपसा भावितात्मना ॥ साकारूपिणी देवि प्रोवाच वचनं मुदा ॥५७ ॥ तुष्टाहं शंकर प्रीता वरं वरय दुर्लभम् ॥ शिव उवाच ॥ बटुकस्य विधानं मे परमं भक्तितो वरम् ॥५८॥परमाशय मंत्रस्य येन सिद्ध्यति सर्वथा ॥ मनोरमाणि मंत्रस्य सर्वकार्याणि सांप्रतम् ॥ ५९ ॥ इति वाक्यं च मे श्रुत्वा मूलभूता सनातनी ॥ उवाच यादृशं देवि विधानं शृणु वल्लभे ॥ ६० ॥ बटुकाख्यस्य देवस्य भैरवस्य महात्मनः ॥ ब्रह्मविष्णुमहेशाद्यैर्वंदितस्य दयानिधेः ॥ ६१ ॥ न्यासा एकादश प्रोक्ता बटुकाराधने शिवे ॥ यान्विना नैव सिद्धिः स्याद्वर्षाणामयुतैरपि ॥ ६२ ॥ प्रथमः प्रेतबीजेन सिंहबीजेन चापरः ॥ काणबीजेन सत्यायाः श्रीबीजेन ततः परम् ॥ ६३ ॥ प्राणबीजेन वै न्यासान्कुर्यात्तत्र विचक्षणः ॥ घंटाबीजेन च न्यासं विधाय ख्यातिबीजतः ॥६४॥ मूलबीजेन पश्चाच्च न्यास कृत्वा महामतिः ॥ भ्रामरीबीजतो न्यासं विदध्यात्प्रीतिसंयुतः ॥ ६५ ॥ एवं न्यासान्दशादौ तु न करोति नरो यदा ॥ वांछयेऽहं वरारोहे तावन्मंत्रो न सिद्ध्यति ॥ ६६ ॥ श्रीदेव्युवाच ॥ देवदेव जगन्नाथ शंभो संसारतारक ॥ कृपां कृत्वा न्यासविधिं ब्रूहि येन सुखं भवेत् ॥ ६७ ॥ कालेनेह यथाल्पेन साधकः सिद्धिमाप्नुयात् ॥ गोपनीयो न मंत्रोऽयं बटुकाख्यो जगद्गुरो ॥६८॥ तथा निरूपय विभो बालकोऽपि यथा लभेत् ॥ शिव उवाच ॥ शृणु देवि जगत्पूज्ये न्यासबीजानि शोभने ॥६९॥ प्रकटानि यथा शश्वत्कथयामि हिताय ते ॥ स्थानेषु येषु बीजानि न्यस्तव्यानि महात्मभिः ॥ ७० ॥ तथात्र प्रवदिष्यामि शृणु मत्प्राणवल्लभे ॥ शिवचंद्रशिवैः शक्रस्वरोपेतैः सबिंदुभिः ॥ ७१ ॥ प्रेतबीजं समाख्यातं तेनांगानि न्यसेच्च षट् ॥ हृच्छिरश्च शिखानेत्रकवचास्त्रेषु सुंदरि ॥७२॥ शिवो हः ॥ चन्द्रः सः ॥ शक्रस्वर आ ॥ ह स ह् रैं तथा ॥ शिवचंद्रौ ससंवर्त्तौ वामनेत्रविभूषितौ ॥ बिंदुनादयुतौ देवि न्यासं सान्निध्यकारकम् ॥ ७३ ॥ सिंहबीजमिदं देवि विन्यसेत्सुरसुंदरि ॥ संवर्त्तः क्षः ॥ तेन हसक्षैम् ॥ तथा ॥ मूर्ध्नि बाह्वोश्च लिंगे च नाभौ हस्तांगुलीषु च ॥ ७४ ॥ पादांगुलीषु देवेशि विन्यसेत्परमेश्वरि ॥ अजेशोऽग्निसमारूढः शक्रस्वरशशीयुतः ॥ ७५ ॥ काणबीजमिदं प्रोक्तं विन्यसे ॥ ४६ ॥

त्परमेश्वरि ॥ अजेशः झकारः ॥ अग्नी रेफः ॥ शशी बिंदुः ॥ तेन झ्रौं ॥ तथा ॥ ब्रह्मरंध्रे मुखे नेत्रयुग्मे ग्रीवान सोराप ॥ ७६ ॥ कपोलयोश्च चिबुके ब्रह्मरंध्रे पुनर्न्यसेत् ॥ कालः शक्रः शिवः सद्यो बिंदुनादविभूषिता ॥ ॥ ७७ ॥ सत्यावीजं महेशानि विन्यसेदंगके बुधः ॥ कालः मः ॥ शक्रः लः ॥ शिवः हः ॥ सद्यः ओ ॥ बिंदुनादविभूषिता तेन मल हों ॥ तथा ॥ पादयोर्हस्तयोश्चैव वदने करयोस्तथा ॥ ७८ ॥ नेत्रयोः श्रोत्रयोः कुक्ष्योर्मेढ़े चैव प्रविन्यसेत् ॥ अस्थ्यग्निवामकर्णेंदुनादैर्देवि समीरितम् ॥ ७९ ॥ महाश्रीबीजमीशानि चिबुका दिषु विन्यसेत् ॥ अस्थि शः ॥ अग्नी रः ॥ वामकर्ण ऊ ॥ इंदुनादौ पूर्ववत् ॥ तेन श्रूं ॥ चिबुके पादयोश्चैव कर्ण योर्हृदये तथा ॥ ८० ॥ वदने च तथा पादद्वये नाभौ च पादयोः ॥ लोहिताग्न्यासनो वामकर्णेंदुभिरथाद्रिजे ॥८१॥ प्राणबीजीमति ख्यातं हृदादिषु प्रविन्यसेत् ॥ लोहितः यः ॥ अग्नीरः ॥ आसनः ॥ वामकर्णः ऊ ॥ इंदु तेन यूं ॥ हृदये च मुखे देवि हृदये नाभिमंडले ॥८२॥ हृदये पादयोर्देवि हृदये सव्यकुक्षिके ॥ हृदये वामकुक्षौ च हृदये दक्षपत्तले ॥८३॥ हृदये वामपादे च हृदये विन्यसेत्प्रिये ॥ कतुरीयोग्निमारूढो वामकर्णें दुनादवान्॥८४॥ घंटाबीजं महादेवि विन्यसेत्परमेश्वरि ॥ कतुरीयः घः ॥ अन्यत् प्राग्वत् ॥ तेन घ्रुं ॥ घंटिकायां च नाभौ च घंटिकायां हृदि न्यसेत् ॥८५॥ चंडेशो वायुवह्न्याढ्यो वामकर्णेन्दुनादवान् ॥ ख्यातिबीजमिति प्रोक्तं विन्य सेद्देवि साधकः ॥ ८६ ॥ चंडेशः खः ॥ वायुर्यः ॥ वह्न्यादि प्राग्वत् ॥ तेन रख्यूं मस्तके पादयोश्चैव ग्रीवायां नाभिमंडले ॥ ८७ ॥ गले च हृदि देवेशि जंघयोर्नेत्रयोस्तथा ॥ कर्णयोर्बाहुयुग्मे च स्तनयोश्च न्यसेत् प्रिये ॥ ८८ ॥ तथा ॥ प्रणवो मूलबीजं हृद्वदने पादयोः प्रिये ॥ हस्तयोः कर्णयोर्नासायुग्मे चैव प्रविन्यसेत ॥ ८९ ॥ द्विरंडरेवतीशक्रचंद्रहंसत्रिमूर्तिभिः ॥ सबिंदुनादैर्देवेशि भ्रामरीबीजमीरितम् ॥ ९० ॥ द्विरंडः भः ॥ रेवती रः ॥ शक्रः लः ॥ चंद्रः सः ॥ हंसः हः ॥ त्रिमूर्त्तिः ई ॥ बिंदुनादौ ॥ प्राग्वत् ॥ तेन। भ र ल स हीं ॥ मुखे नेत्रद्वये कर्णद्वये चैव कपोलयोः ॥ गंडयोः कंठदेशे च स्तनयोर्हृदि पादयोः ॥ ९१ ॥ चिबुके मस्तके बाह्वोः स्कंदयोर्दंतलेखयोः ॥ ब्रह्मरंध्रे तथाऽऽधारे भ्रूमध्ये च न्यसेत्प्रिये ॥ ९२ ॥ इति न्यासा न्समाधाय पुरश्चरणकारकः ॥ यथोक्तन्यासकारी च यदि नो वर माप्नुयात् ॥ ९३ ॥ तदा कन्यादूषणोत्थं मम पाप प्रजायताम् ॥ न्यासैरेतैर्वरारोहे ब्रह्महत्या विनश्यति ॥ ९४ ॥ का कथान्यस्य पापस्य सत्यं सत्यं वदामि ते ॥ मम न्यासानथो वक्ष्ये त्रीन्देवस्य महात्मनः ॥९५॥ यान्विधाय नरो विंदेत्सिद्धिं लोकेषु दुर्लभाम् ॥ आकूत बीजं विन्यस्येन्मस्तके गंडयोर्मुखे ॥ ९६ ॥ कालबीजं चक्षुषोश्च कर्णयोरपि विन्यसेत् ॥ नाभौ लिंगे गुदे वापि विद्याबीजं कपोलयोः ॥ ९७ ॥ ब्रह्मरंध्रे दंतपंक्तौ विन्यसेत्साधकोत्तमः ॥ श्रीदेव्युवाच ॥ भगवन्करुणा सिंधो दीनबंधो जगद्गुरो ॥ ९८ ॥ कृपां कृत्वा समाख्याहि सूत्रैरेव पृथक् पृथक् ॥ साधकस्तु यथा सिद्धिमचिरे

णैव विंदति ॥ ९९ ॥ श्रीमहादेव उवाच ॥ शृणु देवि प्रवक्ष्यामि न्यासत्रयविधिं पृथक्॥दीर्घाकालाग्निशक्राणामथ: कालानलांत्यकाः ॥ १०० ॥ वह्न्यस्थिवह्निगगनं चंद्रो वामाक्षिमंडितः ॥ बिंदुनादसमाक्रांतं बीजमाकूतमुत्तमम् ॥ ॥१०१॥ दीर्घा नः । कालः मः । अग्निः रः । शक्रः लः । कालो मः । अग्निः रः । शक्रः लः । कालो मः । अनलो रः । अंत्यः क्षः । अस्थि शः । वह्निः रः । गगनं हः । चंद्रः सः । वामाक्षि ईः । बिंदुनादौ प्राग्वत् । तेन—न म र ल म र क्ष श र हसीं इति जातम् । तथा । शिरसि गंडयोर्वक्त्रे वेदबीज प्रविन्यसेत् ॥ ब्रह्माग्नींद्वग्निकालवह्निवामाक्षिभिः प्रिये ॥ १०२ ॥ सबिंदुनादैर्देवेशि कालबीजमितीरितम् ॥ ब्रह्मा कः । अग्नी रः । इंदुः सः । अग्निः रः । कालः मः । वह्निः रः । वामाक्षि ई । बिंदुनादौ प्राग्वत् । तेन—कर ल स र मरीं इति जातम् । नेत्रयोः कर्णयोर्नाभिलिंगगुदेषु विन्यसेत् ॥ १०३ ॥ तथा ॥ संवर्तानलचन्द्राग्निशिवचंद्रत्रिमूर्तिभिः ॥ सबिंदुनादैर्देवेशि विद्याबीजं समुद्धृतम् ॥ १०४ ॥ संवर्तः क्षः ॥ अनलः रः ॥ चंद्रः सः ॥ अग्निः रः ॥ शिवो हः ॥ चंद्रः सः ॥ त्रिमूर्तिः ई ॥ बिंद्वादि प्राग्वत् ॥ तेन—क्ष र स र ह सीं इति जातम् ॥ कपोलयोर्ब्रह्मरंध्रे दंतपंक्त्योश्च विन्यसेत् ॥ एतन्न्यासत्रय प्रोक्तं साधकाभीष्टसिद्धिदम् ॥१०५॥ यस्य प्रसादमासाद्य साधकः शीघ्रसिद्धिदः ॥ शृणु देवि प्रवक्ष्यामि शृंखलान्यासमुत्तमम् ॥ १०६ ॥ यस्य प्रसादाच्च शिवे बटुकः सिद्धिदो भवेत ॥ मस्तके दक्ष नेत्रे च वामनेत्रे तथैव च ॥ १०७ ॥ दक्षकर्णे वामकर्णे कपोले दक्षिणे तथा ॥ वामेकपोले दक्षे च गंडके वामके पुनः ॥ १०८ ॥ चिबुकेऽथ गले स्कंधे दक्षिणे वामके तथा ॥ स्तने दक्षेऽथ वामे च हृदये दक्षकुक्षिके ॥ १०९ ॥ वामकुक्षौ च नाभौ च वक्षोजंघे च वामके ॥ लिंगे मेढ्रे दक्षिणे च वामे च वरवर्णिनि ॥ ११० ॥ मेढ्रशब्दो वृषणवाची पक्षवामनिर्देशात् लिंगस्योक्तत्वाच्चेति ॥ मूलाधारे दक्षगुल्फे वामगुल्फे तथैव च ॥ दक्षपादे च वामे च दक्षपादांगुलीषु च ॥ १११ ॥ वामपादांगुलीष्वेवं ब्रह्मरंध्रे तथैव च ॥ मूलाधारे पुनश्चैव पुनर्वै ब्रह्मरंध्रके ॥ ११२ ॥ महापराख्यं बीज च विन्यसेत्साधकोत्तमः ॥ चन्द्रसूर्यौ पुनस्तौ च मही ब्रह्मा मही प्रिये ॥ ११३ ॥ त्रिमूर्तिरस्थि वह्न्यंबु वह्न्यंबुधरणीजलम् ॥ षष्ठस्वरत्रिमूर्त्त्विन्दुनादभूषितमस्तकम् ॥ ११४ ॥ महापराख्यबीजं ते कथितं सुरवंदिते ॥ चन्द्रसूर्यौ स हौ । पुनस्तौ स हौ । मही लः ॥ ब्रह्मा कः । मही लः ॥ त्रिमूर्तिः ई। अस्थि शः । वह्निः रः । अंबु वः । वह्निः रः ॥ अंबु वः । धरणी लः ॥ जल वः ॥ षष्ठस्वरः ऊ। त्रिमूर्तिः ई । बिंदुनादौ प्राग्वत्। तेन—स ह स ह ल क ल ई शरवरलवऊ ईं ॥ न्यासेनानेन सुश्रोणि साक्षाच्छिवसमो भवेत् ॥ ११५ ॥ बटुकस्याथ वक्ष्यामि मातृकान्यासमुत्तमम् ॥ कृतेन येन बटुकः साधकस्य करे भवेत् ॥ ११६ ॥ श्रीबीजैः पंचभिर्यच्च मातृणां मंडलं भवेत् ॥ प्रोक्तमादौ तथा चांते ठांते फांते लसांतके ॥ ॥ ११७ ॥ बटुकस्य परं पूज्यं मातृकान्यासमुत्तमम् ॥ विज्ञाय साधयेत्प्राज्ञः स सद्यः शिवतां व्रजेत् ॥ ११८ ॥

विनेमं मातृकान्यासं योऽन्येन न्यासमाचरेत् ॥ बटुकस्तस्य कुपितः सद्यः शापं प्रयच्छति ॥ ११९ ॥ तस्य न्यासः
प्रकर्त्तव्यः साधकेन विपश्चिता ॥ सर्वेषु मातृस्थानेषु वपुःपावनहेतवे ॥ १२० ॥ मातृकान्यासमेनं हि त्यक्त्वाऽन्यं
न्यासमाचरेत् ॥ वर्षकोटिप्रयत्नेन स सिद्धिं नैव विंदति ॥१२१॥ ङकारमादौ संयोज्य सर्वं पूर्ववदाचरेत् ॥ अयमं
तर्मातृकाख्यो न्यासः स्यात्पूर्वसिद्धिदः ॥ १२२ ॥ ॐकारमादिमं कृत्वा न्यासोऽयं वरवर्णिनि ॥ नाम्ना बहिर्मा
तृकाख्यो न्यासश्चूडामणिर्भवेत् ॥ १२३ ॥ ध्यानानि पूर्ववद्देवि कथितानि महामते ॥ अथान्यं न्यासमाख्यास्ये
शृणुष्व वरवर्णिनि ॥१२४॥ सरस्वतीमातृकाख्यं सद्यः सिद्धिप्रदायकम् ॥ न्यसेन्महामते बीजं मातृकास्थानकेषु
च ॥ १२५ ॥ महासरस्वती देवी सद्यः सिद्धिप्रदायिका ॥ क्रोधीशोऽथ पिनाकीशो दारकेशभुजंगकौ । १२६ ॥
भृग्वीशनकुलीशौ च भुजंगो नकुलीशकः ॥ संवर्त्तबकरेवत्यस्त्रिमूर्त्विंदुविभूषिताः ॥ १२७ ॥ महासरस्वती
बीजं कथितं देवदुर्लभम् ॥ क्रोधीशः कः । पिनाकीशः लः । दारकेशो डः । भुजंगः रः । भृग्वीशः सः । नकुलीशो
हः । भुजंगः रः । नकुलीशो हः । संवर्त्तः क्षः । बकः शः । रेवती रः । त्रिमूर्त्तिः ई ॥ बिंदुः । तेन–क ल
ड र स ह र क्ष श र ईं । इति जातम् ॥ इमे न्यासाः समाख्याता बटुकाराधने शिवे ॥ १२८ ॥ सद्यः सिद्धि
करा देवि भाग्यलभ्या न संशयः ॥ न्यूनन्यासस्य कर्त्ता यः सद्यो हानिमवाप्नुयात् ॥ १२९ ॥ एतस्मादधि
कन्यासा न्यस्तव्या जन्मनि तथा ॥ कोटीशकोटिप्रदेशे । एवं न्यस्ततनुर्देवि ध्यायेद्बटुकभैरवम् ॥ १३० ॥ शुद्ध
स्फटिकसंकाशं द्विनेत्रोत्पलशोभितम् ॥ कुटिलालकसंवीतं चारुस्मेरमुखांबुजम् ॥ १३१ ॥ नानारत्नमयैः
कल्पैः किंकिणीजालनूपुरैः ॥ दीप्तं शुच्यंबरावीतं द्विभुजं दक्षिणे करे ॥ १३२ ॥ त्रिशिखं सव्यहस्ते च दधानं
दंडमद्भुतम् ॥ बटुवेषधरं शंभुं सात्त्विकं साधकः स्मरेत् ॥ १३३ ॥ रुद्रयामले तु ॥ कपालं वामहस्ते तु सूक्ष्म
दंडं कमंडलुम् ॥ एवं ध्यात्वा यजेद्देवं शैवे पीठे सुरेश्वरि ॥ १३४ ॥ अष्टपत्र महादेवि कर्णिकाकेसरोज्ज्व
लम् ॥ पद्मं विरच्य तन्मध्ये कर्णिकायां सुरेश्वरि ॥ १३५ कृत्वा षट्कोणमस्यांतस्त्रिकोणं परिकल्पयेत् ॥
तन्मध्ये पद्मकं कुर्याद्व्योमपत्रविराजितम् ॥ १३६ ॥ कर्णिकाकेसरैर्युक्तं तन्मध्ये बटुकं यजेत् ॥ मूर्तिं मूलेन
संकल्प्य तस्यामावाहयेत्प्रभुम् ॥ १३७ ॥ सद्योजातेन मंत्रेण मूलाद्येन महेश्वरि ॥ स्थापयेद्वामदेवेन मूला
द्येन च सुव्रते ॥ १३८ ॥ सन्निधाप्याथ मूलेन केवलेन स्वमुद्रया ॥ अघोरांतेन मूलेन संनिरोधनमाचरेत् ॥
॥ १३९ ॥ मूलेन सम्मुखीकुर्यादवगुंठ्याथ मूलतः ॥ षडंगैः शकलीकृत्यामृतीकत्य च मूलतः ॥१४०॥ परमीक
रणं चैव स्वस्वमुद्राभिरर्चयेत् ॥ एतत्सर्वं विधातव्यं ततो ध्यानं समाहितः ॥ १४१ ॥ कृत्वा सुस्थापनं
तस्य मुद्राः संदर्शयेदथ ॥ लिंगाद्याः पूर्वमुद्दिष्टा योनिमुद्रा तथांतिमा ॥ १४२ ॥ तां दर्शयेत्तत्पुरुषमूल्याभ्यां
च महेश्वरि ॥ आसनाद्यैश्च पुष्पांतैरुपचारैस्ततोऽर्चयेत् ॥ १४३ ॥ ततो देवाज्ञया सम्यग्यजेदावृत्तिदेवताम् ॥

न्यासस्थानेषु देवस्य देहेऽगानि समर्चयेत् ॥ १४४ ॥ देवस्य देहे देवेशि पंचमूर्तीर्यजेत्क्रमात ॥ अंगुलीदेहवक्त्रेषु
त्रिविधन्यासमार्गतः ॥ १४५ ॥ कर्णिकायां यजेत्पश्चात्पूर्वदक्षोत्तरेषु च ॥ पश्चिमे देवमूर्तौ च व्योमपद्मदले
ष्वथ ॥ १४६ ॥ असितांगं रुरुं चण्डं क्रोधमुन्मत्तभैरवम् ॥ कपालिनं भीषणं च संहारं च समर्चयेत् ॥
॥ १४७ ॥ षट्कोणेषु षडगानि यजेद्देवि यथाविधि ॥ ततोऽष्टदलपद्मांतः षट्कोणाद्बहिरद्रिजे ॥ १४८ ॥
पूर्वादीशानपर्यंतं वक्ष्यमाणान्समर्पयेत् ॥ डाकिनीपुत्रकान्देवि राकिनीपुत्रकानपि ॥ १४९ ॥ शाकिनीपुत्रका
न्भूयोहाकिनीपुत्रकांस्ततः ॥ मालिनीपुत्रकान्देवि देवीपुत्रानतः परम् ॥ १५० ॥ उमापुत्रान्रुद्रपुत्रान्मातृपुत्रा
नपीश्वरि ॥ वामभागे तु देवस्य यजेद्देवान्क्रमेण वै ॥ १५१ ॥ इंद्रेशाग्निदिशोर्मध्ये ऊर्ध्वमुख्याः सुतान्यजेत् ॥
अधोमुख्याः सुतान्देवि यजेद्रक्षोजलेशयोः ॥ १५२ ॥ अंतराले महेशानि पुत्रवर्गास्त्रयोदश ॥ रुद्रयामले ॥
रुद्रपुत्रानंतरम् ॥ देशग्रामाधिपौ चैव स्थानाधिपमनुक्रमात् ॥ १५३ ॥ मेघनादं प्रचंडाग्रे कालदूतं तथैव
चेत्युक्तं यथोपदेशमंत्रा अपीति ॥ १५४ ॥ इत्थं संपूज्य तद्बाह्ये पद्मपत्रेषु पूजयेत् ॥ ब्रह्माणीपुत्रकं पूर्वं माहे
शीपुत्रमीश्वरि ॥ १५५ ॥ वैष्णवीपुत्रकं सौम्ये कौमारीपुत्रमानिले ॥ इंद्राणीपुत्रकं देवि पश्चिमे पूजयेत्ततः ॥
॥ १५६ ॥ देवेशि नैर्ऋते पश्चान्महालक्ष्मीसुतं यजेत् ॥ वाराहीपुत्रकं देवि दक्षिणे वह्निकोणके ॥ १५७ ॥ चामुं
डापुत्रमभ्यर्च्य लोकेशं बटुकं नमेत् ॥ अष्टपत्राद्बहिर्देवि चतुरस्रांतरे पुनः ॥ १५८ ॥ अष्टदिक्षु यजेदेतान्हेतुकं
त्रिपुरांतकम ॥ वेतालमग्निजिह्वं च कालांतकमतः परम् ॥ १५९ ॥ करालमेकपादं च भीमरूपं महेश्वरि ॥
अभ्यर्च्यद्रशयोमध्ये यजेदचलमद्रिजे ॥ १६० ॥ हाटकेशं महेशानि पाशीराक्षसयोस्तथा ॥ चतुरस्रादिरेखायां
दिग्विदिक्षु सुरेश्वरि ॥ १६१ ॥ अंतरालेषु वाभ्यर्चेच्छ्रीकण्ठादीन्सुरेश्वरि ॥ ततो द्वितीयरेखायां क्रोधीशादीन्सुरे
श्वरि ॥ १६२ ॥ आशाद्यंतान्समभ्यर्च्य तृतीयायां समर्चयेत् ॥ दंडीश्वरादिभृग्वंतांल्लकुलीशादिकान् शिवे ॥ १६३ ॥
देवस्य वामभागे तु पूजयेत्परमेश्वरि ॥ दिग्व्यंतरिक्षभूमिष्ठान्योगीशान् शक्तिसंयुतान् ॥ ६४ ॥ योगिनीश्च
समभ्यर्चेदीशानादिषु सुंदरि ॥ कोणेषु देवदेवेशि दिगीशानायुधैः सह ॥ १६५ ॥ चतुरस्राष्टके देवि पूजयेदु
क्रमार्गतः ॥ इति संपूजयेद्देवं बटुकं भक्तितत्परः ॥ १६६ ॥ धर्मार्थकाममोक्षाणां प्राप्तिर्भवति निश्चयात् ॥
अथ शारदातिलके ॥ उद्धरेद्बटुकं ङेऽन्तमापदुद्धारणं तथा ॥ १६७ ॥ कुरुद्वयं पुनर्ङेऽन्तं बटुकं तं समुद्धरेत ॥
एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ॥ १६८ ॥ अभीष्टफलसंसिद्ध्यै कीर्तितः सुरपादपः ॥ बृहदारण्यक
ऋषिश्छन्दोऽनुष्टुबुदाहृतम् ॥ १६९ ॥ आपदुद्धारणो देवो भैरवो देवता बुधैः ॥ अंगुलीदेहवक्त्रेषु मूर्तीर्न्यस्य
यथा पुरा ॥ १७० ॥ संपादिपंचह्रस्वाढ्यं शक्तिबीजपुरःसरम् ॥ चकारपंचह्रस्वान्वमीशानादिषु योजयेत्
॥ १७१ ॥ षड्दीर्घयुक्तया शक्त्या वकारेण च तद्वतः ॥ अंगानि जातियुक्तानि प्रणवाद्यानि कल्पयेत् ॥ १७२ ॥

तस्य ध्यानं त्रिधा प्रोक्तं सात्त्विकादिविभेदतः ॥ सात्त्विकं ध्यानमाख्यातमपमृत्युनिवारणम् ॥१७३॥ आयुरारोग्य जननमपवर्गफलप्रदम् ॥ राजसं ध्यानमाख्यातं धर्मकामार्थसिद्धिदम् ॥ १७४ ॥ तामसं शत्रुशमनं कृत्याभूतम दापहम् ॥ वर्णलक्षं जपेन्मंत्रं हविष्याशी जितेन्द्रियः ॥१७५॥ तद्दशांशं च जुहुयात्तिलैर्मधुरसंयुतैः ॥ धर्माधर्मादिभिः क्लृप्ते पीठे पंकजशोभिते ॥ १७६ ॥ षट्कोणांतस्त्रिकोणस्थं व्योमपंकजशोभिते ॥ बटुकं पूजयेद्देवं मूर्तिं मूलेन कल्पयेत् ॥ १७७ ॥ सद्योजातेन मंत्रेण देवमावाहयेत्ततः ॥ मूलादिवामदेवेन स्थापयेत्परमेश्वरम् ॥ १७८ ॥ मूलमन्त्रेण कर्तव्यं सान्निध्यं तदनन्तरम् ॥ अघोरेण सुधीः कुर्यात्संनिरोधमनंतरम् ॥ १७९ ॥ पुरुषाख्येन मनुना योनिमुद्रां प्रदर्शयेत् ॥ देवाय वंदनं कुर्यादीशानेन समाहितः ॥ १८० ॥ एतत्सर्वं विधातव्यं तत्तन्मुद्रा प्रदर्शनात् ॥ ईशानादीन्यजेद्देवान्न्यासमार्गेण देशिकः ॥ १८१ ॥ सकलीकरणं कृत्वा येन मूर्तिं यथा पुरा ॥ व्योमपद्मदलेष्वर्चेदसितांगादिभैरवान् ॥ १८२ ॥ असितांगं रुरुं चंडं क्रोधमुन्मत्तभैरवम् ॥ कपालिनं भीषणाख्यं संहारं च क्रमादमून् ॥ १८३ ॥ षट्कोणेषु षडंगानि क्रमेणाभ्यर्चयेत्सुधीः ॥ पूर्वादीशानपर्यन्तं तद्बहिः पूजयेदिमान् ॥ १८४ ॥ डाकिनीपुत्रकान्पूर्वं राकिनीपुत्रकांस्ततः ॥ लाकिनीपुत्रकानर्चेत्काकिनीपुत्रकांस्ततः ॥ १८५ ॥ शाकिनीपुत्रकान्भूयो हाकिनीपुत्रकान्पुरः ॥ याकिनीपुत्रकानर्चेद्देवीपुत्रांस्तथापरान् ॥ १८६ ॥ अथोमारुद्रमातृणां पुत्रान्दक्षिणतो यजेत् ॥ ऊर्ध्वमुख्याः सुतानूर्ध्वमधोमुख्याः सुतानधः ॥ १८७ ॥ इति संपूजयेन्मंत्री पुत्रवर्गांस्त्रयोदश ॥ तद्बहिः पद्मपत्रेषु लोकेशबटुकान्यजेत् ॥ १८८ ॥ ब्रह्माणीपुत्रकं पूर्वे माहेशीपुत्रमीश्वरे । वैष्णवीपुत्रकं सौम्ये कौमारीपुत्रमानिले ॥१८९॥ इंद्राणीपुत्रकं भूयः पूजयेत्पश्चिमे ततः ॥ महालक्ष्मीसुतं पश्चाद्रक्षोदिशि समर्चयेत् ॥ १९० ॥ वाराहीपुत्रकं याम्ये चामुंडासुतमानिले ॥ बटुकान्दशदिक्ष्वर्चेद्धेतुकं त्रिपुरांतकम् ॥१९१॥ वेतालवह्निजीवाख्यं कलाताख्यं करालकम् ॥ एकपादं भीमदंष्ट्रमचलं हाटकेश्वरम् ॥१९२॥ दिशि दिक्ष्वंतरालेषु श्रीकंठादीन्यजेत्पुनः ॥ क्रोधीश्वरादीन्भृग्वंतांस्तत्तद्बाह्ये समर्चयेत् ॥ १९३ ॥ ततस्त्रीन्नकुलीशादीन्दक्षिणे पूजयेत्सुधीः ॥ दिव्यांतरिक्षभूमिष्ठान्योगीशान् शक्तिसंयुतान् ॥ १९४ ॥ योगिनीभिः सहाभ्यर्चेदीशाग्निनिर्ऋतिस्थितान् ॥ इति संपूजयेद्देवं बटुकं प्रोक्तवर्त्मना ॥ १९५ ॥ धर्मार्थकाममोक्षाणां पतिर्भवति मानवः ॥ विघ्नदुर्गां समाराध्य बलिं दत्त्वा विधानतः ॥ १९६ ॥ काम्यादीन्साधयेन्मंत्री यथोक्तं सिद्धिमाप्नुयात् ॥ शाल्यन्नं पललं सर्पिर्लाजाचूर्णानि शर्करा ॥ १९७ ॥ गुडमिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितः ॥ कृत्वा ग्रासं समाराध्य देवं प्रागुक्तवर्त्मना ॥ १९८ ॥ रक्तचंदनपुष्पाद्यैर्निशि तस्मै बलिं हरेत् ॥ ततः सिध्यंति कार्याणि बलिनानेन मंत्रिणः ॥ १९९ ॥ जुहुयात्सर्पिषा मंत्री यथोक्तं सिद्धिमाप्नुयात् ॥ वश्याय जुहुयादिक्षुशकलैर्वशये जनान् ॥ २०० ॥ जुहुयात्पुत्रलाभाय प्रफुल्लैः करवीरजैः ॥ धनधान्यादिसंपत्त्यै जुहुयात्तिलतंडुलैः ॥ २०१ ॥

बिल्वप्रसूनैर्जुहुयान्महतीं विंदते श्रियम् ॥ लवणैर्मधुसंसिक्तैर्वशयेद्वनिताजनान् ॥ २०२ ॥ वृष्टिकामेन होतव्यं वेतसानां समिद्वरैः ॥ अन्नेन जुहुयान्नित्यं धनधान्यादिसंपदे ॥ २०३ ॥ वश्याय जुहुयान्मंत्री मधुना दिवसत्रयम् ॥ रोगोक्तौषधहोमेन रोगा नश्यंति तत्क्षणात् ॥ २०४ ॥ कृत्याद्रोहे ग्रहद्रोहे भूतापस्मारसंभवे ॥ व्याघ्राजिने समासीनो जुहुयादयुतं तिलैः ॥२०५॥ भूतादयः पलायंते त्यक्ष्यंते तां दिशं भयात् ॥ कृष्णाष्टमीं समारभ्य यावत्स्यां तच्चतुर्दशी ॥ २०६ ॥ तिलैस्तंदुलसंमिश्रैर्मधुरत्रयलोलितैः ॥ त्रिसहस्रं प्रतिदिनं जुहुयात्संस्कृतेऽनले ॥ २०७ ॥ बटुकेशं समभ्यर्च्य भक्ष्यभोज्यफलान्वितः ॥ नित्यं निवेद्य समये मध्यरात्रे बलिं हरेत् ॥ २०८ ॥ एवं जपित्वा प्रयतः सहस्राण्येकविंशतिः ॥ समाप्तिदिवसे रात्रावजं हुत्वा बलिं हरेत् ॥ २०९ ॥ ततः कारयिता राजा तोषयेत्साधकं धनैः ॥ प्रयोगदिवसे नित्यं भक्ष्यभोज्यैः सदक्षिणैः ॥ २१० ॥ विप्रान्सप्त महादेवि तोषयेद्वांछिताप्तये ॥ समाप्तिदिवसे विप्रान्सप्तसप्त समाहितः ॥ २११ ॥ भोजयेद्वस्त्रवित्ताद्यैस्तोषयेज्जगदीश्वरि ॥ विधिनानेन संतुष्टो बटुकेशः प्रयच्छति ॥२१२॥ तेजो बलं यशः पुत्रान्कांतिं लक्ष्मीं मनोरमाम् ॥ नश्यंति शत्रवः सर्वे वर्द्धंते मित्रबांधवाः ॥ २१३ ॥ अवग्रहो न जायेत विषये तस्य भूपतेः ॥ जुहुयात्केवलैर्लोणैरयुतं स्तंभनेच्छया ॥ २१४ ॥ निगडादिविमोक्षाय प्रयोगोऽयमुदाहृतः ॥ वचाचूर्णं पलं कृत्वा गव्येनाज्येन लोलितम् ॥ २१५ ॥ मंत्रयेन्मनुना तेन देवीसाग्रं सहस्रकम् ॥ विभजेच्चूर्णपंचाशद्भागेन परमेश्वरि ॥ २१६ ॥ दिनशो भागमेकैकं भक्षयेद्गोघृतान्वितम् ॥ विभज्य भक्षयेद्वंध्यामंडलं पुत्रकांक्षिणी ॥ २१७ ॥ विनीतपुत्रमाप्नोति मेधारोग्यबलान्वितम् ॥ दीर्घायुष्यं च वंध्यापि किं पुनः कन्यकाप्रसूः ॥ २१८ ॥ आदावंते प्रयोगस्य बटुकाय बलिं हरेत् ॥ द्विविधो वलिराख्यातो राजसः सात्त्विको बुधैः ॥ २१९ ॥ राजसो मांसरक्ताढ्यपलत्रयसमन्वितः ॥ मुद्गपायससंयुक्तो मधुरत्रयसंयुतः॥२२०॥सात्त्विको मांसरहितःशेषमन्यपुरोक्तवत्॥ब्राह्मणो नियतः शुद्धः सात्त्विकं बलिमाहरेत् ॥ २२१ ॥ साधयन्विधिनानेन भस्म सर्वार्थसिद्धिदम् ॥ उशीरं चन्दनं कुष्ठं घनसारं सकुंकुमम्॥२२२॥ श्वेतार्कमूलवाराहिलक्ष्मीक्षीरमहीरुहाम् ॥ त्वचो बिल्वतरोर्मूलं शोषयित्वा सुचूर्णयेत् ॥ २२३ ॥ चूर्णं व्योम्नि गृहीतेन गोमयेन विमिश्रितम् ॥ कृत्वा पिंडाभिसंशोष्य संस्कृते हव्यवाहने ॥ २२४ ॥ मूलेन दग्ध्वा तद्भस्म शुद्धे पात्रे विनिक्षिपेत् ॥ केतकीमालतीपुष्पैर्वासयेद्भस्मशोभितम् ॥ २२५ ॥ अयुतं प्रजपेन्मंत्रं स्पृष्ट्वा भस्म सुपूजितम् ॥ एतदादाय दिनशः प्रातः पुंड्रं करोति यः ॥ २२६ ॥ ब्राह्मणो वेदविधिना त्रिपुंड्रं धारयेत्सुधीः ॥ शुद्राद्यैर्मूलमंत्रेण सर्वै वा मूलमंत्रतः ॥ २२७ ॥ तस्य रोगाः प्रणश्यंति कृत्याद्रोहमहाग्रहाः ॥ रिपुचोरमृगादिभ्यो भयमस्य न जायते ॥ २२८ ॥ वर्द्धंते संपदः सर्वाः पूज्यते सकलैर्जनैः ॥ राजा वश्यो भवेत्तस्य सामात्यः सपरिच्छदः ॥ २२९ ॥ अभिषेकं प्रकुर्वीत राज्ञो विजयकांक्षिणः ॥ पूर्वोक्तमंडपे क्लृप्ते विता

नध्वजशोभिते ॥ २३० ॥ सर्वतोभद्रमालिख्य कर्णिकां तस्य पूजयेत् ॥ अष्टद्रोणप्रमाणेन शालिभिः शोभितैः शुभैः ॥ २३१ ॥ तदर्धास्तंदुलास्तस्मिन्न्यस्य दूर्वाक्षतान्वितम् ॥ हेमादिविहितं कुम्भं नवरत्नसमन्वितम् ॥ ॥ २३२ ॥ संस्थाप्य विमलैस्तोयैरापूर्यास्मिन्विनिक्षिपेत् ॥ क्षीरद्रुमप्रवालानि लक्ष्मीदूर्वासहायुतः ॥ २३३ ॥ कर्पूरं चन्दनं बिल्वमुशीरं कुंकुमं पुनः ॥ कंकोलमगुरुं जातिं मल्लिकाचंपकोत्पलैः ॥ २३४ ॥ गोमेदकाडिमं पश्चात्पट्टसूत्रेण वेष्टयेत् ॥ तस्मिन्नावाह्य बटुकं राजसं संप्रपूजयेत् ॥ २३५ ॥ बहिरष्टसु कुंभेषु भैरवानष्ट पूजयेत् ॥ त्रयोदशेषु कुम्भेषु त्रयोदशगणान्यजेत् ॥ २३६ ॥ बाह्ये दशसु कुम्भेषु लोकेशानर्चयेत्सुधीः ॥ तद्बहिर्द्व्यष्टकुम्भेषु श्रीकंठादीन्सुरेश्वरान् ॥ २३७ ॥ पंचत्रिंशद्घटेष्वर्चेत्कादिवर्णेश्वरान्क्रमात् ॥ इति गन्धादिभिः सम्यक्पंचावरणमर्चयेत् ॥ २३८ ॥ अयुतं प्रजपेत्स्पृष्ट्वा तान्घटान्देशिकोत्तमः ॥ पायसैः सर्पिषा शुद्धैस्तिलैर्दशशतं पृथक् ॥ २३९ ॥ जुहुयात्तान्घटान्स्पृष्ट्वा प्रत्यहं बलिमाहरेत् ॥ राजसोक्तप्रकारेण रात्रौ देशिकसत्तमः ॥ २४० ॥ सुदिने शोभने लग्ने वाचयित्वा द्विजातिभिः ॥ स्वस्तिमंगलवाक्यानि विशुद्धैर्वेदपारगैः ॥ २४१ ॥ नदत्सु पंचवाद्येषु प्रणम्य बटुकेश्वरम् ॥ जितेंद्रियं शुद्धकार्यं राजानं ब्राह्मणप्रियम् ॥ २४२ ॥ आस्तिकं शुद्धवचनमभिषिंचेत्प्रसन्नधीः ॥ अभिषिक्तो नरपतिः प्रणिपत्य गुरुं परम् ॥ २४३ ॥ भूयसीं दक्षिणां दद्यात्प्रसीदति यथागुरुः ॥ राजाभिषिक्तो भवति साक्षाद्भूमिपुरंदरः ॥ २४४ ॥ परान्विजयते भूपान्स्तूयते सकलैर्नरैः ॥ भक्ष्यैर्भोज्यैर्धनैर्धान्यैः पूजयंति यशस्विनः ॥ २४५ ॥ कृत्वाभिषेकं षण्मास प्रतिमासं महीपतिः ॥ चतुरंभोधिवलयां शास्ति सर्वां वसुंधराम् ॥ २४६ ॥ गजाश्वशांतिविधये तेषां शालासु साधकः ॥ कुंडं कृत्वा विधानेन होमं कृत्वा यथाविधि ॥ २४७ ॥ पायसाज्यतिलैर्विद्वानयुतत्रितयावधि ॥ ब्राह्मणान्भोजयेन्नित्य भक्ष्यभोज्यफलादिभिः ॥ २४८ ॥ प्राक्प्रोक्तविधिना कुंभान्स्थापयित्वात्र देशिकः ॥ अभ्यर्च्य गंधपुष्पाद्यैस्तज्जलैः प्रोक्षयेद्गजान् ॥ २४९ ॥अश्वशालामनेनैव वर्द्धते सा दिने दिने ॥ युद्धेषु महती शक्तिर्जायते पूर्वतोऽधिका ॥ २५० ॥ सर्वे रोगाः प्रणश्यंति कृत्याद्रोहाः परैः कृताः ॥ अस्मात्परतरा रक्षा नास्ति तेषां महीतले ॥ २५१ ॥ अभिषिच्य महीपालं परेषां विजयोद्यतम् ॥ उक्तेन विधिना मंत्री यामिन्यां बलिमाहरेत् ॥ २५२ ॥ अन्यूनांगमजं हत्वा राजसं प्रागुदाहृतम् ॥ बलिप्रदानसमये रिपूणां सर्वसैन्यकम् ॥ २५३ ॥ निवेशयेद्बलित्वेन बटुकाय विशिष्टधीः ॥ विदर्भयेच्छत्रुनाम्ना बलिमन्त्रं यथा सुधीः ॥ २५४ ॥ शत्रुपक्षस्य रुधिरं पिशितं च दिनेदिने ॥ भक्षयन्स्वगणैः सार्द्धं सारमेयसमन्वितः ॥ २५५ ॥ बलिमंत्रोऽयमाख्यातः सर्वेषां विजयप्रदः ॥ अनेन बलिना हृष्टो बटुकः परसैन्यकम् ॥ २५६ ॥ सर्वगणेभ्यो विभजेदामिषं क्रुद्धमानसः ॥ एवं कृते परबलं क्षीयते नात्र संशयः ॥ २५७ ॥ विजये श्रियमेतेन राजा प्राप्नोत्ययत्नतः ॥ २५८ ॥ श्रीमायास्मरकूटमंत्रमुल्लिखेन्मध्ये

दलेष्वष्टसु द्विः प्रोक्तं बटुकाय शब्दमपरान्मंत्रस्य वर्णान्बहिः ॥ अष्टद्वंद्वदलेषु तद्वहिरपितत्संख्यपत्रेष्वथ द्वा
त्रिंशद्दलकादिसांतसहितं यंत्रं लिखेद्भूपुरे ॥ २५९ ॥ आपदुद्धारणं यन्त्रमपमृत्युभयापहम् ॥ सर्वसंपत्प्रदं नित्यं
सर्वसौभाग्यदायकम् ॥ रक्षाकरं ग्रहार्तानां राज्ञां विजयवर्द्धनम् ॥ २६० ॥ आपदुद्धारणादस्मादापदुद्धार
णक्षमः ॥ मंत्रेषु नास्ति मन्त्रोऽन्य इत्याहुर्मंत्रवेदिनः ॥ २६१ ॥ रुद्रयामले ॥ देव्युवाच ॥ भगवन्देवदेवेश रहस्यं
बटुकस्य मे ॥ ब्रूहि येन वशीकुर्युः साधका भैरवं शिव ॥ २६२ ॥ श्रीशिव उवाच ॥ शृणु देवि परं
गोप्यं कथयामि सुशोभने ॥ रहस्यं सिद्धिदं साक्षाद्बटुकस्य महात्मनः ॥ २६३ ॥ सर्वे बटुकदेवस्य
साधने ये निरूपिताः ॥ उपाया निष्फला एव विनैकं वीरसाधनम् ॥ २६४ ॥ येनान्यसाधनं
हित्वा उपायं चान्यमाश्रयेत ॥ न स सिद्धिमवाप्नोति नरो वर्षशतैरपि ॥ २६५ ॥ माषान्मुद्रान्मसूरांश्च
चणकानोदनं तथा ॥ क्षारं तथापूपमपि शष्कुलीरपि शोभनाः ॥ २६६ ॥ ( शष्कुली मुद्दाली ) ॥ आदाय
सूत्रं कार्पासं कन्याकर्तितमेव च ॥ कुंकुमेनापि संरज्य कारयित्वाष्टकीलकान् ॥ २६७ ॥ स्तंभार्थमेकं
कीलं च गृहीत्वा सुरसुंदरि ॥ गच्छेच्छ्मशाननिकटे सुधीः सोत्तरसायकः ॥ २६८ ॥ पादप्रक्षालनं कृत्वा ततः
स्मृत्वा स देवताम् ॥ बद्ध्वांजलिमिदं वाक्यं प्रवदेत्साधकोत्तमः ॥ २६९ ॥ अत्र श्मशाने याः काश्चिद्देवता
निवसंति हि ॥ ताः प्रयच्छन्तु मे सिद्धिं प्रसन्नाः संतु पांतु माम् ॥ २७० ॥ पूर्वे मां शंकरः पातु तथाग्नेय्यां च
शूलधृक् ॥ कपाली दक्षिणे पातु नैर्ऋत्ये जटिलोऽवतु ॥ २७१ ॥ पश्चिमे पार्वतीनाथो वायव्ये प्रमथाधिपः ॥ उत्तरे
मुंडमालोऽव्यादीशाने वृषभध्वजः ॥२७२॥ ऊर्ध्वं पातु तथा शंभुरधस्ताद्धूलिधूसरः ॥ अग्रतो भैरवः पातु पृष्ठतः
पातु खेचरः ॥२७३॥ दक्षिणे भूचरः पातु वामे च पिशिताशनः ॥ केशान्पातु विशालाक्षो मूर्द्धानं च मरुत्प्रियः
॥ २७४॥ मस्तकं पातु भृग्वीशो नेत्रे पातु महामनाः ॥ कपोलौ पातु वीरेशो गंडौ गंडाभिमर्दनः ॥२७५॥ उत्तरोष्ठे
विरूपाक्षो ह्यधरे योगिनीप्रियः॥अक्षेषु दक्षविध्वंसी चिबुके तु कपालधृक् ॥२७६॥ कंठे रक्षतु मां देवो नीलकंठो
जगद्गुरुः ॥ दक्षस्कंधे गिरींद्रेशो वामस्कंधे वसुंजयः ॥ २७७ ॥ दक्षिणे च भुजे सर्वमंत्रनाथः सदावतु ॥ वाम
भुजे सार्वभौमो हृदये पातु पांडुरः ॥ २७८ ॥ दक्षस्तने पशुपतिर्वामे पातु महेश्वरः ॥ उदरे सर्वकल्याणकारको
ऽवतु मां सदा ॥२७९॥ नाभौ कामप्रविध्वंसी जंघे पातु दयामयः ॥ जानुनी पातु जामित्रो गुल्फौ गौरीपतिः सदा
॥२८०॥ पादपृष्ठे सामनिधिस्तथापादांगुलिर्हरः ॥ पादाधः पातु सततं व्योमकेशो जगत्प्रियः ॥ २८१ ॥
इति रक्षां समाधाय मन्त्ररक्षां ततश्चरेत् । ॐ ह्रां ह्रीं ह्रूं ह्रः पूर्वे ॥ ह्रिं ह्रुं ह्रों आग्नेये ॥ ॐ ह्रिं श्रिं दक्षिणे ॥
ॐ ग्लूं न्लूं नग नग नैर्ऋत्ये ॥ ॐ यह्रं भ्रं भ्रूं सं सः पश्चिमे ॥ ॐ भ्रां भ्रां वायव्ये ॥ ॐ भ्रां भ्रां भैरव उत्तरे ॥
ॐ ब्रं ब्रं ब्रूं फट् ईशाने ॥ ॐ ग्लौं ब्लूं ऊर्ध्वे ॥ ॐ भ्रां भ्रं भ्रः अधोदेशे ॥ एवं रक्षां समाधाय दिक्पालार्च

नमाचरेत् ॥ २८२ ॥ ततो वाक्यं पुनर्ब्रूयात्साधकः प्रीतिसंयुतः ॥ "भ्रां भैरव भैरवाय नमः भ्रां भैरव भैरव भयंकरहर मां रक्षरक्ष हुं फट् स्वाहा ॥ " इति प्रार्थयित्वा ॥ २८३ ॥ एकस्मिन्भाजने कृत्वा पालाशस्य महा त्मनः ॥ सिद्धमाषान् व्रजेत्प्राच्यां दिशि पूजार्थमादरात् ॥ २८४ ॥ तत्र स्थित्वा तु पुटकं करे धृत्वा विच क्षणः ॥ संभ्रमेण सुधीः प्रोक्तं दद्यादिंद्राय वै बलिम् ॥ २८५ ॥ ॐ ह्रां ह्रीं हुं समुच्चार्य भो इंद्र सुरनायक ॥ प्रसन्नो भव मे शीघ्रं देहि सिद्धिं सनातनीम् ॥ २८६ ॥ इमं बलिं गृह्णगृह्ण हुं फडुच्चार्य साधकः ॥ बलिं दत्त्वा महाभागे सिद्ध्यर्थं प्राणवल्लभे ॥ २८७ ॥ ततो रं रां समुच्चार्य रूं रूं रीमपि च प्रिये ॥ अग्रे हूं ग्लूं मया दत्तं बलिं हुं फट् समुच्चरेत् ॥ २८८ ॥ मुद्गान्पात्रे समाधाय प्रदद्याद्बलिमादरात् ॥ ततो दक्षिणदेशांशे समा गत्य विचक्षणः ॥ २८९ ॥ ॐ प्रां प्रीं प्रूं समुच्चार्य तथा प्रां प्रीमिति त्रिधा ॥ प्रेतनाथपदस्यांते बलिं गृह्णेति चोच्चरेत् ॥ २९० ॥ हुं फडंतोऽयमाख्यातो यममंत्रो वरानने ॥ अनेन दक्षिणे देशे पात्रं मसूरपूरितम् ॥ २९१ ॥ स्थापयित्वा नमस्कृत्य नैर्ऋत्यांशे ततो व्रजेत् ॥ बलिं चणकपात्रस्य दद्यात्साधकसत्तमः ॥ २९२ ॥ ॐ फ्रें फ्रें फ्रें समुच्चार्य ततो हूं हूं तथैव च ॥ खें खें खें च ततो ब्रूयात्ततो ह्रौं ह्रौं समुच्चरेत् ॥ २९३ ॥ रक्षोनाथपदं ब्रूयाद् गृह्ण हुं फट् समन्वितः ॥ अनेन मनुना दद्याद्रक्षोनाथबलिं बुधः ॥ २९४ ॥ ततः पश्चिमदेशस्थो भूत्वा देशिकसत्तमः ॥ जलनाथाय सुबलिं दद्यात्स्वस्यार्थ सिद्धये ॥ २९५ ॥ ॐ व्रां व्रीं व्रूं समुच्चार्य ततो वरुणमुच्चरेत् ॥ बलिमेनं मया दत्तं गृहाण परमेश्वर ॥ २९६ ॥ अनेन मंत्रवर्येण वरुणायौदनस्य च ॥ बलिं दद्यान्महाभाग स्वार्थसिद्धय आदिशेत् ॥ २९७ ॥ वायुदेशं समासाद्य ततो वायोर्बलिं हरेत् ॥ पायसं पात्रमादाय परमादर संयुतः ॥ २९८ ॥ ॐ वां वीं वूं समुच्चार्य ॐ ब्रां ब्रीं ब्रूं तथैव च ॥ हुं फडंतो मनुरयं वायोः सिद्धिप्रदायकः ॥ २९९ ॥ अनेन मनुना प्राज्ञो वायवे बलिमाहरेत् ॥ ॐ कूं कूं कूं समुच्चार्य ॐ क्रां क्रां क्रां समुच्चरेत् ॥ ३०० ॥ हुं फडंतेन मनुना बलिं दद्याद्विचक्षणः ॥ ऐशान्यां दिशि ह्याश्रित्य साधकप्रवरस्ततः ॥ ३०१ ॥ ईशानाय बलिं दद्यात्सर्वकामार्थसिद्धये ॥ ॐ श्रां श्रीं श्रूं समुच्चार्य ॐ श्रां श्रां श्रामथोच्चरेत् ॥ ३०२ ॥ हुं फडंतः समाख्यातो मंत्रोऽयं लोकदुर्लभः ॥ अनेन मनुना दद्याच्छष्कुलीः पात्रसंस्थिताः ॥ ३०३ ॥ बल्यर्थं सर्वकामार्थसिद्धये साधको त्तमः ॥ एवमष्टबलीन्दद्यात्सर्वकामार्थसिद्धये ॥ ३०४ ॥ स्तंभाधोभागमाश्रित्य कार्यमग्रे समाचरेत् ॥ पुष्पाक्ष तान्समादाय ॐ ह्रां ह्रीं हूं समुच्चरेत् ॥ ३०५ ॥ स्तंभमंत्रोऽयमाख्यातः सर्वकामार्थसिद्धये ॥ अनेन मनुना प्राज्ञ स्तंभं संपूज्य निर्भयः ॥ ३०६ ॥ ततः पठेन्मंत्रमिमं कवचं कार्यसिद्धये ॥ यस्य प्रसादमासाद्य साधको निर्भयो भवेत् ॥ ३०७ ॥ ह्रां ह्रीं हूं ह्रः समुच्चार्य क्ष्रां क्ष्रीं क्ष्रूं क्ष्रः समुच्चरेत् ॥ स्वां स्वीं स्वूं स्वः समुच्चार्य ग्रां ग्रीं ग्रूं ग्रः ततो वदेत् ॥ ३०८ ॥ म्रां म्रीं म्रूं म्रः समुच्चार्य म्रं म्रें म्रों म्रौं ततो वदेत् ॥ ह्रों ह्रों ह्रों ह्रों समुच्चार्य क्लों क्लों

क्लीं क्लीं पुनर्वदेत् ॥ ३०९ ॥ श्रों श्रों श्रों साधकः प्रोच्य त्रों त्रों त्रों त्रों समुच्चरेत् ॥ हुं हुं हुं हुं समुच्चार्य हुं हुं हुं हुं फट् अथोच्चरेत् ॥ ३१० ॥ सर्वतो रक्षरक्षेति रक्षरक्षेति भैरव ॥ नाथ नाथ पदं प्रोच्य फडंतोऽयं महामनुः ॥ ३११ ॥ सर्वरक्षाकरः प्रोक्तः साधकाभीष्टदायकः ॥ एवं विधाय मतिमांस्तनौ रक्षां विशालधीः ॥ ३१२ ॥ वीरशांतिमथो कुर्यात्सर्वकार्यस्य सिद्धये ॥ यया सिद्ध्यंति कार्याणि साधकानां महेश्वरि ॥ ३१३ ॥ यावत्कुर्यान्न वीराणां शांतिं साधकसत्तमः ॥ तावन्न जायते सिद्धिः साधकस्य कथंचन ॥ ३१४ ॥ श्मशानदेशे ये वीराः शिरस्यादाय शासनम् ॥ मम स्थितानि कृंतंति साधकानां मनोरथान् ॥३१५॥ अपूजिताः पूजितास्ते सर्वकामफलप्रदाः ॥ वीरशांतिमथो वक्ष्ये साधकानां हिताय वै ॥ ३१६ ॥ यस्याः प्रसादमासाद्य साधकः सुखमेधते ॥ पद्ममष्टदलं कृत्वा तद्बाह्ये षोडशं तथा ॥३१७॥ तद्बाह्येऽष्टदलं चापि भूपुरं च ततो लिखेत् ॥ एवं मंडलमालिख्य साधको निर्भयः स्थितः ॥ ३१८ ॥ मूलमंत्रेण नैवेद्यं भैरवाय समर्पयेत् ॥ आद्यपद्मस्य मध्ये तु ततश्चैवाष्टभैरवान् ॥ ३१९ ॥ षोडशाब्दे महापद्मे ततः साधकसत्तमः ॥ सम्पूज्य प्रयतो दद्यान्नैवेद्यं पायसस्य च ॥ ॥ ३२० ॥ मित्राणि षोडश प्राज्ञे भैरवस्य महात्मनः ॥ कुलीशं सुकुलीशं च जामित्रं रामठारिभौ ॥ ३२१ ॥ प्रचंडं चंडकोशं च चन्डात्मानं च चामरम् ॥ चारित्रं च चमत्कारं चंचलं चारुभूषणम् ॥ ३२२ ॥ चामीकरं चारुवहं कितवं चेति षोडश ॥ नत्यंतनामभिः पूज्याः षोडशानन्दपूरिताः ॥३२३॥ ततोऽष्टपत्रे संपूज्य ब्राह्म्याद्या मातृसत्तमाः ॥ स्वस्वदिक्षु महेंद्रादीन्पूजयेत्साधकोत्तमः ॥ ३२४ ॥ ततोऽक्षतान् समादाय विकिरंश्चक्रमण्डले ॥ वीरशांतिं पठेत्सम्यक् साधकः प्रीतमानसः ॥ ३२५ ॥ चंडप्रचंडोर्ध्वकेशभीषणाभीषणाभिधाः ॥ व्योमकेशो व्योमबाहुर्व्योमव्यापक एव च ॥ ३२६ ॥ एतान्वीरान्समाहूय ह्यायाहीति समुच्चरन् ॥ मण्डले साधकश्रेष्ठो नैवेद्यादिभिरर्चयेत् ॥३२७॥ एवमर्चां समाधाय साधको निर्भयः स्थितः ॥ पूर्वप्रोक्तान्सुधीः कृत्वा न्यासानत्यंतसिद्धिदान् ॥ ३२८ ॥ पश्चिमाभिमुखो भूत्वा मालामादाय पाणिना ॥ उच्चैस्तरां जपं कुर्यादागताय महात्मने ॥ ३२९ ॥ भैरवाय समीपे तु वामहस्तेन पायसम् ॥ भोजयेच्च जपं कुर्यान्निर्भयः प्रीतमानसः ॥३३०॥ तृप्तो देवो यदा ब्रूयाद्वरं वरय वांछितम् ॥ प्रणम्य दंडवद्भूमौ वांछितं वरमुच्चरेत् ॥ ३३१ ॥ गृहे चागत्य प्रयत उत्सवं च समाचरेत् ॥ अनेन मनुना देवि सिद्धेन जगतीतले ॥ ३३२ ॥ असाध्यं नास्ति लोकेषु सत्यं सत्यं मयोदितम् ॥ वचाचूर्णं पलस्यार्धं तन्मानं घृतसंयुतम् ॥ ३३३ ॥ पद्मपात्रे विनिक्षिप्य त्रिशतं प्रजपेद्बुधः ॥ प्राशयेन्नियतो भूत्वा पुनर्लक्षत्रयं जपेत् ॥ ३३४ ॥ तस्यैवं कुर्वतः प्रज्ञा निःसीमा भवति ध्रुवम् ॥ गद्यपद्यमयी वाणी श्रुतस्याप्यवधारणम् ॥ ३३५ ॥ अत्र वचाचूर्णभक्षणं तु यावद्भिर्दिनैस्त्रिलक्षजपो भवति तावद्भागान्कृत्वा प्रत्यहमेकं भागं प्राशयेदिति सांप्रदायिकाः ॥ विवादप्रयोगे विशेषो रुद्रयामले ॥ शुक्लपक्षे द्वितीयायां

शुक्रवारे समाहितः ॥ पूर्ववत्पूजयेद्देवं सिद्धान्नं च निवेदयेत् ॥ ३३६ ॥ पलार्द्धं च वचाचूर्णं तन्मानघृतसंयुतम् ॥ पद्मपत्रे विनिक्षिप्य त्रिसहस्रं जपेद्बुधः ॥३३७॥ त्रिसहस्रजपो विशेषः, अन्यत्सर्वं समानम् ॥ विवादक्षेत्रमध्ये तु देवं ध्यात्वा च तत्क्षणात् ॥ अभिमंत्र्य मृदं प्राश्य संध्योपास्य स्वयं प्रभुम् ॥ ३३८ ॥ ससप्ताहांस्त्रिकाले तु तत्तपश्चैव सिद्ध्यति ॥ मृत्युंजयमहं वक्ष्ये यथावच्छृणु सुंदरि ॥ ३३९ ॥ उत्तरायणकाले तु दक्षिणायन एव च ॥ कालज्ञानमिदं ज्ञात्वा तत्त्वज्ञानं जपेत्पुमान् ॥ ३४० ॥ कृष्णाष्टम्यां चतुर्थ्यां वाप्यंगारकदिने ततः ॥ सात्त्विकं बालरूपं च द्विभुजं चिंतयेद्बुधः ॥३४१॥ अर्चयित्वा यथान्यायं सिद्धान्नं च निवेदयेत् ॥ यद्रूपं कथितं पूर्वमादिमध्यांतवर्जितम् ॥ ३४२ ॥ तुषारकर्णिकाभासं ध्यात्वा देवं समाहितः ॥ सूकरीक्षुद्रया युक्तं खेचरीबहुमेलकम् ॥ ३४३ ॥ ध्यानयोगेन मंत्रं च मनसापि जपेद्बुधः ॥ इत्येवं तु जपेल्लक्षं तदा मृत्युंजयो भवेत् ॥ ३४४ ॥ मृत्युनंगालिकांक्षीबेत्सात्त्विकं श्वेतरूपकम् ॥ हृदये स्वासनं ध्यात्वा तन्मध्ये देवमास्थितम् ॥ ३४५ ॥ न तस्य कालनी कांतिमूर्तिमंडलमाप्नुयात् ॥ कृष्णपक्षे चतुर्दश्यां भूमिपुत्रस्य वासरे ॥ ३४६ ॥ आराध्य विधिवद्देवं तस्याग्रे स्थापयेद् बुधः ॥ रोचनाहेमजे पात्रे संपूज्य विधिनाथ ताम् ॥ ३४७ ॥ गंधपुष्पादिना स्पृष्ट्वा तां जपेदयुतत्रयम् ॥ तद्गतवर्त्तिं प्रज्वाल्य कपिलाघृतसेविताम् ॥ ३४८ ॥ सौवर्णे नृकपाले वा पात्रे संगृह्य चांजनम् ॥ संपूज्य च पुनर्जप्त्वा तत्पात्रं मंत्रसंग्रहम् ॥ ३४९ ॥ ध्यात्वा वादवदंशोरेतदा चाञ्जनमाचरेत् ॥ वश्या भवंति ते सर्वे यान्यान्पश्यति साधकः ॥ ३५० ॥ वंध्याचिकित्सां कुर्वाणो बालार्काभं समर्चयेत् ॥ हरिद्रार्धपलं चैव वचाचूर्णं च तत्समम् ॥ ३५१ ॥ पेषयित्वा तु गोमूत्रे गोलकं घृतसंयुतम् ॥ पद्मपत्रे विनिक्षिप्य स्थापयेद्देवसन्निधौ ॥ ३५२ ॥ प्रणिपत्य नमस्कृत्य जपेदुच्चैः सहस्रकम् ॥ एवमेव प्रकारेण प्राशयेत्तु महौषधम् ॥ ३५३ ॥ श्रीमंतमायुष्मंतं च बलवंतं सुदर्शनम् ॥ विद्यावंतं पुत्रवंतं सद्यः पुत्रमवाप्नुयात ॥ ३५४ ॥ अन्यत्र ॥ वर्णलक्षं जपेन्मंत्रं ततः सिद्धिर्भविष्यति ॥ हविष्यभक्षणं कुर्याद् भूमिशायी जितेंद्रियः ॥ ३५५ ॥ दशांशं हवनं कुर्यात्तिलाज्यमधुभिर्द्विजः ॥ कोटिजपकृते मर्त्यो श्रियमाप्नोत्यनुत्तमाम् ॥ ३५६ ॥ वश्यार्थमयुतं जप्त्वा रक्तपुष्पैर्दशांशतः ॥ होमं कुर्यात्करवीरैः श्वेतैर्विद्यामवाप्नुयात् ॥ ३५७ ॥ लक्ष्म्याप्त्यै कमलैर्होमो दीर्घायुर्दूर्वया हुते ॥ गुडेन रोगनाशः स्यादपमृत्युनिवारणम् ॥ ३५८ ॥ वस्त्रेण वस्त्रप्राप्तिः स्याद्धान्यात्तिर्धान्यहोमतः ॥ पुत्रजीविफलैर्होमे सर्वसिद्धिमवाप्नुयात् ॥ ३५९ ॥ अश्वत्थसमिधा होमे पुत्राप्तिः सर्वसिद्धयः ॥ लवणघृतहोमेन शत्रून्मादकरं भवेत् ॥ ३६० ॥ काकोलूकमांसहोमाच्छत्रून्मारयते ध्रुवम् ॥ सप्तरात्रेण देवेशि स्मशाने च त्रिलक्षकम् ॥ ३६१ ॥ जपित्वा बलिदानेन बटुको दर्शने भवेत् ॥ वटवृक्षतले मर्त्यस्त्रिलक्षं प्रजपेन्निशि ॥ ३६२ ॥ रसायनं च गुटिकां चेटकां सिद्धि

माप्नुयात् ॥ बिभीतकवृक्षतले यदि लक्षं जपेन्नरः ॥ ३६३ ॥ वेतालभूतप्रेताश्च वश्या भवंति निश्चयात् ॥ जुहुयाद्दारुणैर्भोजैरजोदोषैर्मधुराप्लुतैः ॥ ३६४ ॥ लक्षसंख्या तदर्धं वा प्रत्यहं भोजयेद् द्विजान् ॥ वनितां युवतीं रम्यां प्रीणयेद्देवताधिया ॥ ३६५ ॥ होमान्ते धनधान्याद्यैस्तोषयेद्गुरुमात्मनः ॥ एवं कृते जगद्वश्यो रमाया भवनं भवेत् ॥ ३६६ ॥ रक्तोत्पलैस्त्रिमध्वक्तैररुणैर्वा हरिद्रजैः ॥ पुष्पैः पयोऽन्नैः सघृतैर्होमाद्विश्वं वशं नयेत् ॥ ३६७ ॥ वाक्सिद्धिं लभते मंत्री पालाशकुसुमैर्हुते ॥ कर्पूरागुरुसंयुक्तं गुग्गुलं जुहुयात्सुधीः ॥ ३६८ ॥ ज्ञानं दिव्यमवाप्नोति तेनैव स भवेत्कविः ॥ क्षीराक्तैरमृताखंडैर्होमः सर्वापमृत्युजित् ॥ ३६९ ॥ दूर्वाभिरायुषे होमः क्षीराक्ताभिर्दिनत्रयम् ॥ गिरिकर्णिभवैः पुष्पैर्नवधूकर्णिकारजैः ॥ ३७० ॥ मालतीकुसुमैर्हुत्वा तत्पुत्रांश्च वशं नयेत् ॥ कारंडकुसुमैर्वैश्यावृषलान्पाटलोद्भवैः ॥ ३७१ ॥ आत्मानमविलेपांतस्थितसाध्याह्वयान्वितम् ॥ मंत्रमुच्चार्य जुहुयान्मंत्री मधुरलोडितैः ॥ ३७२ ॥ सर्षपैः पटुसंमिश्रैर्वशयेत्पार्थिवान्क्षणात् ॥ अनेनैव विधानेन सपत्नीं तत्सुतानपि ॥ ३७३ ॥ जातिबिल्वफलैः पुष्पैर्मधुरत्रयसंयुतैः ॥ नरनारीनरपतीन्होमतो वशयेद् ध्रुवम् ॥ ॥ ३७४ ॥ मालतीकुसुमोद्भूतैः पुष्पैश्चंदनलोडितैः ॥ जुहुयात्कवितां मंत्री लभते वत्सरान्तरे ॥३७५॥ मधुरत्रयसंयुक्तैः फलैर्बिल्वसमुद्भवैः ॥ जुहुयाद्वशयेल्लोकान् श्रियं प्राप्नोति वाञ्छिताम् ॥ ३७६ ॥ पाटलैः कुसुमैः कुंदैरुत्पलैर्नागचंपकैः ॥ नंद्यावर्तैर्विकचितैः कृतमालैर्जुहोति यः ॥ ३७७ ॥ जायते वत्सरादर्वाक्छ्रिया विजितपार्थिवः ॥ साज्यमन्नं प्रजुहुयाद्भवेदन्नसमृद्धिमान् ॥ ३७ ॥ कस्तूरीकुंकुमोपेतं कर्पूरं जुहुयाद्वशी ॥ कंदर्पादधिकं सद्यः सौंदर्यमधिगच्छति ॥ ३७९ ॥ लाजान्प्रजुहुयान्मंत्री दधिक्षीरघृतप्लुतान् ॥ विजित्य रोगानखिलाञ्जीवेच्च शरदां शतम् ॥ ३८० ॥ पादद्वयं मलयजं पादं कुसुमकेसरम् ॥ पादं गोरोचनायाश्च त्रीणि पिष्ट्वा हिमांभसा ॥ ३८१ ॥ विदध्यात्तिलकं भाले यान्पश्वादीन्विलोकयेत् ॥ यान्स्पृशेत्स्पृतो यो वै वश्याः स्युस्तस्य तेऽचिरात् ॥ ३८२ ॥ कर्पूरकपिचोराणि समभागानि कल्पयेत् ॥ चतुर्भागो जटामांसी तावती रोचना मता ३८३ ॥ कुंकुमं सप्तभागं स्याद्द्विभागं चंदनं मतम् ॥ अगुरु नवभागं स्यादेवं भागक्रमेण च ॥ ३८४ ॥ हिमाद्रिः कन्यकापिष्टमेतत्सर्वं सुसाधितम् ॥ यो भाले तिलकं धत्ते कुर्याद्भूमिपतीन्नरान् ॥ ३८५ ॥ वासितामदगर्वाढ्यान्मदोन्मत्तान्मतंगजान् ॥ सिंहान्व्याघ्रान्महासर्पान्भूतवेतालराक्षसान् ॥ ३८६ ॥ दर्शनादेव वशयेत्तिलकं धारयेन्नरः ॥ अथ स्तवराजपुरश्चरणप्रयोगानाह शिवागमसारे ॥ हविशान्नं च माषान्नं यवान्नं तंडुलानि वा ॥ ३८७ ॥ सकृज्जग्ध्वा वाग्यतश्च भूमिशायी जितेंद्रियः ॥ एकादशसहस्रं वै पुरश्चरमाचरेत् ॥ ३८८ ॥ स्तोत्रादौ मूलमंत्रं च ह्यष्टोत्तरशतं जपेत् ॥ स्तोत्रांते च शतावृत्तिं कृत्वा स्तोत्रं पठेत्पुनः ॥ ३८९ ॥ एवं संपुटितं कृत्वा देवं नत्वा पठेत्स्तवम् ॥ दशांशं हवनं कुर्यात्तद्दशांशेन

तर्पणम् ॥ ३९० ॥ मार्जनं तद्दशांशेन दशांशं विप्रभोजनम् ॥ एवं कृते मनुष्यो वै प्राप्नुयान्मनसेप्सितम् ॥ ३९१ ॥ मतांतरं प्रवक्ष्यामि यं कृत्वा नावसीदति ॥ प्रथमं न्यासपूर्वं हि स्तोत्रपाठं विधाय च ॥ ३९२ ॥ शतं वा मंत्रजाप्यं हि नित्यं कृत्वा सुमंत्रकः ॥ जप्त्वा च विधिपूर्वं हि यथाशक्ति पुनः सुधीः ॥ ३९३ ॥ स्तोत्रपाठं पुनः कृत्वा पूर्वोक्तान्नियमांश्चरेत् ॥ स्तोत्राभ्यां संपुटं कृत्वा होमादि पूर्ववत्सुधीः ॥ ३९४ ॥ मया मतद्वयं प्रोक्तं सर्वेषां सुखहेतवे ॥ प्रयोगांश्च प्रवक्ष्यामि लोकानां हितकाम्यया ॥ ३९५ ॥ आपदुद्धारकं ये वै पठंति प्रत्यहं प्रिये ॥ तेषां न दुर्लभं किंचिदसाध्यं यत्सुरैरपि ॥ ३९६ ॥ दशावर्त्तं च मंत्रस्य पुरा कृत्वा पठेत्स्तवम् ॥ यंत्रादिपूर्ववत्कृत्वा त्रिकालं यः पठेदिह ॥ ३९७ ॥ रात्रौ वारत्रयं यो वै तस्य वश्यं जगद्भवेत् ॥ प्रातश्चैकादशावृत्ति रात्रौ वा पुनरेव हि ॥ ३९८ ॥ पूर्ववच्च विधिं कृत्वा पठनीयः स्तवः शुभः ॥ महानिशि त्रिरावृत्तिं यः करोति सदा शुचिः ॥ ३९९ ॥ राजानो वशमायांति सभाशोभाकरो भवेत् ॥ शनौ च प्रातरुत्थाय दशावृत्तिं चरेदिह ॥ ४०० ॥ होमादिकं च संपाद्य षण्मासादतुलां श्रियम् ॥ शनौ चैवाश्वत्थमूले पूजयित्वा शिवं प्रिये ॥ ४०१ ॥ शतावृत्तिं पठित्वा तु जगद्वल्लभतामियात् ॥ रवौ च नाभिमात्रे हि जले स्थित्वा पठेदिह ॥ ४०२ ॥ एकादश तथावृत्तिं पठित्वा प्राप्नुयाच्छ्रियम् ॥ पठेच्च रोगशांत्यर्थं नक्षत्रे पुष्यसंज्ञके ॥ ४०३ ॥ अष्टावृत्तिं पठेद्यो वै आरोग्यं लभते ध्रुवम् ॥ रवौ च ब्राह्मणान्पूज्य पाठयेच्छतवारकम् ॥ ४०४ ॥ वारेवारे च षण्मासं पठित्वा सुतमाप्नुयात् ॥ सप्तजन्मभवा वंध्या जीवत्पुत्रा भवेदिह ॥ ४०५ ॥ कन्याकामो भवेद्यो वै त्रिकालं रविवासरे ॥ षण्मासादप्सरातुल्यां लभते ह्युत्तमा सुताम् ॥ ४०६ वैद्यानां चैवदुःसाध्यो रोगो भवति तस्य च ॥ यस्य रोगस्य शांत्यर्थं पठेत्स्तोत्रमनुत्तमम् ॥ ४०७ ॥ निष्फलश्च क्रतुर्यस्य भवतीह सदा प्रिये ॥ सहस्रावर्तनं कृत्वा सफलश्च क्रतुर्भवेत् ॥ ४०८ ॥ ग्रहणे च पठेद्यो वै विधिना चंद्रसूर्ययोः ॥ मनोदिष्टां तदा सिद्धिं प्राप्नुयान्नात्र संशयः ॥ ४०९ ॥ तीर्थे चैव शुभे क्षेत्रे शिवस्य सन्निधौ प्रिये ॥ पठित्वा पुत्रमंत्रं च सद्यः सिद्धिं लभेदिह ॥ ४१० ॥ त्रिरावृत्तिं दशावृत्तिं विंशतिं वा शतावधिम् ॥ सहस्रसंख्यया वाथ चैकादशसहस्रकम् ॥ ४११ ॥ पुरश्चरणकं प्रोक्तं भैरवस्य महात्मनः ॥ पुरश्चरणकं कृत्वा पठते नित्यमेव च ॥ ४१२ ॥ सद्यः सिद्धिं यथोक्तां हि प्राप्नुयान्नात्र संशयः ॥ मानुषं जन्म चासाद्य दुःखभाजो भवंति ये ॥ ४१३ ॥ ते भजंतु सदा देवं भैरवं सुखदायकम् ॥ तद्दुःखं नैव विद्येत भैरवो नाशयेदिह ॥ ४१४ ॥ तस्माद्दुःखविनाशाय भैरवः सेव्यतां जनैः ॥ मया दुःखविनाशाय भैरवं रूपमाश्रितम् ॥ ४१५ ॥ भैरवः सेवितो येन तेनैव सेवितो ह्यहम् ॥ अहं भैरवरूपेण लोकानां सुखदः सदा ॥ ४१६ ॥ मया वै भैरवस्यैव विधिराराधनस्य च ॥ विविधाराधनं कामान्प्राप्नुवंति तथा प्रिये ॥ ४१७ ॥ तत्तत्तथा मया देवि प्रोक्तं त्वं च प्रियासि मे ॥ स्थापनीयं त्वया लोके सर्वेषां सुखहेतवे ॥ ४१८ ॥

तिलानां च तथा होमो गुग्गुलस्य तथा पुनः ॥ मधुकानां च पुष्पैश्च ब्रह्मवृक्षभवैस्तथा ॥ ४१९ ॥ बिल्व दलैस्तथा देवि गुडूचीखंडकैस्तथा ॥ करवीरस्य कुसुमैर्बंधुजीवैस्तथा पुनः ॥ ४२० ॥ औदुंबरसमिद्भिश्च पलाशस्य तथा प्रिये ॥ अनेकैश्च फलैर्देवि कदलीबीजपूरकैः ॥ ४२१ ॥ माधुर्यैर्विविधैस्तस्य प्रीत्या होमं प्रकल्पयेत् ॥ घृतेन सितया प्रीतिर्जायते भैरवस्य च ॥ ४२२ ॥ कुंडानि विविधानीह प्रोक्तानि कामभेदतः ॥ ब्रह्मभोज्यं प्रकर्त्तव्यं तस्य प्रित्या प्रीये सदा ॥ ४२३ ॥ त्रिकोणं चैव षट्कोणं चतुष्कोणमथापि वा ॥ हस्तमात्रं द्विहस्तं वा द्वात्रिंशदंगुलं तथा ॥ ४२४ ॥ दशांगुलं च नित्यं चेदेकादशाङ्गुलावधि ॥ महाहोमे महत्प्रोक्तं लघुहोमे लघु स्मृतम् ॥ ४२५ ॥ एतत्ते सर्वमाख्यातं तव प्रीत्यै मया शुभे ॥ दांभिकाय न वक्तव्यं वेदभ्रष्टाय वा तथा ॥४२६॥ संध्याहीनाय नो वाच्यमभक्ष्यभक्षकाय च ॥ पापिष्ठाय तथा देवि विश्वासरहिताय च ॥४२७॥ न वक्तव्यं त्वया देवि सत्यं सत्यं वदामि ते ॥ इति श्रुत्वा तथा देवी संहृष्टा च पुनःपुनः ॥ नमस्कृत्य तदा शंभुं ख्यापयामास वै भुवि ॥ ४२८ ॥ अथ न्यासे विशेषो भैरवकल्पे । ईशानं मूर्ध्नि विन्यस्य मुखे तत्पुरुषं न्यसेत् ॥४२९॥ अघोरं हृदये न्यस्य वामदेवं च गुह्यके ॥ सद्योजातं पदे न्यस्य पंच ब्रह्मापि विन्यसेत् ॥ ४३० ॥ आवाहयेत्तदा देवं सद्योमंत्रेण मूलतः ॥ मूलमंत्रेण संयुक्तं चासनं वामदेवतः ॥४३१॥ सान्निध्यं मूलमंत्रेण चाघोरेण च पाद्यकम् ॥ तत्पुरुषेण योगार्त्ती ईशाने देवमुद्रयोः ॥४३२॥ एव तु मंत्रयोगेन मुद्राषट्कं प्रदर्शयेत् ॥ नष्टद्रव्यस्य प्राप्त्यर्थं कुमारं बटुकं जपेत् ॥ ४३३ ॥ पूर्ववत्पूजयित्वा तु सिद्धान्नं च निवेदयेत् ॥ सहस्रं तु जपं कृत्वा विशेषाद्देवसन्निधौ ॥ ४३४ ॥ आराध्य प्रणिपातेन नष्टद्रव्यं च लभ्यते ॥ रामचंद्राश्रमकृतप्रयोगे ॥ शत्रुसेनाविनाशाय राजा दद्याद्बलिं प्रिये ॥ ४३५ ॥ पूर्वोक्तं राजसं देवि बलिं निष्पाद्य मंत्रवित् ॥ संपूज्य पूर्ववद्देवं मध्यरात्रे महेश्वरि ॥ ४३६ ॥ अन्यूनांगमजं देवि सर्वलक्षणसंयुतम् ॥ आनीय मूलमंत्रेण स्नापयित्वा शुभैर्जलैः ॥ ॥ ४३७ ॥ गंधमाल्यैरलंकृत्य देवस्याग्रे निधाप्य तम् ॥ मूलमंत्रेण संप्रोक्ष्य संरक्ष्यास्त्रेण तं प्रिये ॥ ४३८ ॥ कवचेनावगुंठ्याथ मुद्रया धेनुसंज्ञया ॥ अमृतीकृत्य सर्वांते देवतारूपिणं बलिम् ॥ ४३९ ॥ रूपयेत्पशवेत्युक्त्वा नम इत्यर्चयेत्त्रिधा ॥ गंधादिकैस्ततो देवि कर्णे तस्य प्रनिक्षिपेत् ॥ ४४० ॥ पशुपाशाय इत्युक्त्वा विद्महे तदनंतरम् ॥ द्विप्रकीर्णाय देवेशि धीमहीति ततः परम् ॥ ४४१ ॥ तन्नो जीवः समुच्चार्य वदेद्देवि प्रचोदयात् ॥ इत्येतां पशुगायत्रीं तर्पयित्वा महेश्वरि ॥ ४४२ ॥ निधाय पुरतः खड्गं ॐ ह्रीं काली विधीयते ॥ धीवज्रेश्वरि बलोहांते दंडायै नम इत्यथ ॥ ४४३ ॥ त्रिधा च पूजयेद्देवि मुष्टौ तस्य ततोऽर्चयेत् ॥ वागीश्वरीं च ब्रह्माणीं लक्ष्मीनारायणौ ततः ॥ ४४४ ॥ मध्ये ग्रहेशं देवेशि उमामाहेश्वरौ यजेत् ॥ इत्यर्चितं समादाय खड्गं हस्ते महेश्वरि ॥ ४४५ ॥ आदाय मन्त्रयेन्मन्त्री मन्त्रेणानेन सुव्रते ॥ वज्रायासुरनाशाय

देवकार्यार्थतत्पर ॥ ४४६ ॥ पशुच्छेद्य स्वयं शीघ्रं खड्गनाथ नमोऽस्तु ते ॥ तत उच्चार्य विधिवत्तिथ्युल्लेखाव सानकम् ॥ ४४७ ॥ गोत्रं नाम च ॥ संकीर्त्य कामनां समुदीर्य च श्रीभैरव इमं छागबलिं तुभ्यमहं वदेत् ॥ ॥ ४४८ ॥ प्रददे तत्समुच्चार्य कुशपुष्पाक्षतान्वितम् ॥ जलं पशोस्तु निक्षिप्य शिरसि श्रीशिवे ततः ॥ ४४९ ॥ यज्ञार्थे पशवः सृष्टा यज्ञार्थे पशुघातनम् ॥ अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः ॥ ४५० ॥ इम संबोधयेत्तस्य शिरः स्पृष्ट्वा युतं पशुम् ॥ अस्त्रमंत्रं समुच्चार्य छिंद्धि युग्मं ततो वदेत् ॥ ४५१ ॥ स्वाहेत्युच्चार्य तं खड्गं तस्य स्कंधे नियोजयेत् ॥ स्वात्मानं भैरवं ध्यायन्नामैकेन महेश्वरि ॥ ४५२ ॥ प्रहारेण समुच्छेद्य बलिमंत्र मिमं पठेत् ॥ शत्रुपक्षस्य रुधिरं पिशितं च दिनेदिने ॥ ४५३ ॥ भक्षयस्व गणैः सार्धं सारमेयसमन्वितः ॥ शत्रुनामाक्षरैर्मंत्रविदर्च्य मनुवित्तमः ॥ ४५४ ॥ सैन्यं शत्रोर्बलित्वेन कल्पयित्वा महेश्वरि ॥ पशुना सह तत्सैन्यं सम्यक्तस्मै निवेदयेत् ॥ ४५५ ॥ अनेन बलिदानेन संतुष्टो भैरवः स्वयम् ॥ शत्रुसैन्यं विभज्याथ स्वगणेभ्यः प्रयच्छति ॥ क्रुद्धः सभां जयेच्छीघ्रं नात्र कार्या विचारणा ॥ ४५६ ॥ अथ गजाश्वादिप्रयोगः ॥ तत्र सारसंग्रहे ॥ गजानां च तुरंगाणां विशेषाच्छांतये ततः ॥ ४५७ ॥ तच्छालासु पुरा प्रोक्तं कुंडं कृत्वा यथा विधि ॥ जुहुयात्पायसाद्यैश्च तिलैर्ह्ययुतमुक्तवान् ॥ ४५८ ॥ तदा विप्रान्भक्ष्यभोज्यैस्तोषयेच्च सदक्षिणैः ॥ पूर्वो क्तेन प्रकारेण कलशान्स्थापयेत्ततः ॥४५९॥ तत्र गंधादिभिः सम्यक् बटुकेशं समर्चयेत् ॥ अभिषिंचेज्जलैस्तैस्तान् गजानश्वांश्च मंत्रवित् ॥ ४६० ॥ वर्द्धंते प्रत्यहं चैते गजाश्चापि तुरंगमाः ॥ तेषां च समरे शक्तिर्महती जायते ततः ॥ ४६१ ॥ गजाश्वानामजेयाश्च भवेरन् द्विषतां यदा ॥ अस्मादन्या महारक्षा नास्ति भूमंडलेऽखिले ॥४६२॥ ॥ अथ सर्वकामप्रदं भैरवयंत्रमाह ॥ अथ यंत्रं प्रवक्ष्यामि बटुकस्य सुरार्चिते ॥ आलिख्याष्टदलं पद्मं कर्णि कायां समालिखेत् ॥ ४६३ ॥ ॐ श्रीं ह्रीं क्लीं क्षौमिति तत्पत्रेषु परमेश्वरि बटुकायेत्यक्षराणि द्विरावृत्त्या लिखेत्प्रिये ॥ ४६४ ॥ बहिः षोडश पत्राढ्यं पद्मं कृत्वा सुशोभनम् ॥ तत्पत्रेषु लिखेद्देवि शिष्टान्वर्णांस्तु षोडश ॥ ४६५ ॥ मंत्रश्च तद्बहिश्चापि पद्मं षोडशपत्रकम् ॥ तत्र तेषु लिखेद्देवि स्वरान् षोडश सुव्रते ॥ ४६६ ॥ द्वात्रिंशत्पत्रसंयुक्तं पद्मं कृत्वाथ तद्बहिः ॥ कादिक्षांतांल्लिखेत्तस्य पत्रेषु परमेश्वरि ॥ ४६७ ॥ वेष्टयेच्चतुरस्रेण यन्त्रमेतद्वरानने ॥ जयदं सुखदं वश्यं मृत्युदारिद्र्यनाशनम् ॥ ४६८ ॥ श्रीप्रदं दुरितव्याधि दुष्टग्रहनिकृंतनम् ॥ भूतापस्मारकृत्यादेर्नृणां रक्षाकरं परम् ॥ ४६९ ॥ अस्मात्परतरा रक्षा नास्ति नास्ति न संशयः ॥ अथ त्रोतलतंत्रोक्तभैरवयंत्रोद्धारः ॥ व्योमाब्जं वसुपत्रकेसरधरं शक्त्या वरं षड्दलं पद्मं चाष्टदलं ततः सुविमलं भागेह दीप्तौ बलिम् ॥ वेदद्वारविशालसुंदरतरं पुष्पादिगंधोत्कटं श्रीमद्भैरवसर्वमोहनकरं यन्त्रं त्वदीयं भजे ॥ ४७० ॥ अथ बलिविधानम् ॥ शवं सिद्धमनुर्मंत्री नित्यनैमित्तिके रतः ॥विघ्नं दुर्गां समभ्यर्च्य



बलिं दत्त्वा विधानतः ॥ ४७१ ॥ काम्यानि साध येन्मंत्री यथोक्तां सिद्धिमाप्नुयात् ॥ अत्रं शालि समुद्भूत मांसं पक्कं सशर्करम् ॥ ४७२ ॥ लाजा चूर्णगुडापूपमाक्षिकेक्षुरसान्वितम् ॥ घृतप्लुतं सर्व मेतदेकीकृत्य महेश्वरि ॥ ४७३ ॥ कृत्वा ग्रासं समाराध्य बटुकेशं महेश्वरि ॥ प्रागुक्तेन विधानेन रक्तचन्दनसंयुतैः ॥ ४७४ ॥ रक्तपुष्पाक्षतैर्देवि धूपै दीपैर्मनोहरैः ॥ तस्याग्रे मंडलं कृत्वा चतुरस्रं सुरेश्वरि ॥ ४७५ ॥ त्रिकोण गर्भितं तत्र पात्रे हेम मये शुभे ॥ राजते वाथ कांस्ये वा निधाय कवलं शुभम् ॥ ४७६ ॥ अर्चयित्वाथ तत्पिंडं गंधा द्यैर्मूलमंत्रितैः ॥ बलिद्रव्याय इत्युक्त्वा नम इत्य र्चयेत्ततः ॥ ४७७ ॥ ततो जलं समादाय चुलु केन महेश्वरि ॥ मूलमन्त्रं समुच्चार्य संबोध्य बटुकं प्रिये ॥ ४७८ ॥ इमं बलिं गृह्ण युग्मं स्वाहांतं समुदीर्यच ॥ जलं समर्पयेत्तत्र चिंतयेद्बटुकं प्रिये ॥ ४७९ ॥ स्वहस्ते बलिमादाय भुंजानं वरदं प्रभुम् ॥ राजसोऽयं बलिर्देवि कथितः सर्वसिद्धिदः ॥ ४८० ॥ राजसः सात्त्विकश्चेति सात्त्विकं शृणु वल्लभे ॥ पूर्वोक्तैः सकलैर्द्रव्यैर्मांस हीनैः सुरेश्वरि ॥ ४८१ ॥ मुद्गसूपसमायुक्तैः पायसेन समन्वितैः ॥ मधुरत्रयसंयुक्तैः प्राग्वद्दद्याद्विचक्षणः ॥ ४८२ ॥ आदावंते प्रयोगस्य बटुकाय बलिं हरेत् ॥ राजसो मांसरक्ताढ्यः पलत्रयसमन्वितः ॥ ४८३ ॥ विश्वसारे ॥ मेष कुक्कुटयोर्मांसं शाल्यन्नं घृतसंप्लुतम् ॥ लाजाचूर्णमपूपं च गुडमिक्षुसमन्वितम् ॥ ४८४ ॥ मरीचैर्जीरकैश्चैव गुड

खंडैस्तथैव च ॥ शालितंदुलभक्तं च गोक्षीरेण समन्वितम् ॥ ४८५ ॥ अन्यत्र ॥ पलत्रयं माषचूर्णं दधि क्षीरं घृतं तथा ॥ गुडौदनेन संयुक्तं मिश्रीकृत्य विचक्षणः ॥ ४८६ ॥ अथ तंत्रसारोक्तबटुकमंत्राः ॥ निबंधे ॥ उद्धरे द्वटुकंठेत मापदुद्धारणं तथा ॥ कुरुद्वयं पुनरोतं तु बटुकं च तदुद्धरेत् ॥ ४८७ ॥ ह्रीं बटुकाय आपदुद्धारकाय कुरुकुरु बटुकाय ह्रीम् ॥ एकविंशत्यक्षरात्मा शक्तिरुद्धो महामनुः ॥ ४८८ ॥ अस्य पूजाप्रयोगः ॥ प्रातः कृत्यादि प्राणायामांतं विधाय पीठन्यासं कुर्यात् ॥ यथा धर्माद्यनैश्वर्य्यान्तं विन्यस्य ऋष्यादिन्यासं कुर्यात्॥ यथा ॥ शिरसि बृहदारण्यकऋषये नमः ॥ मुखे गायत्रीछन्दसे नमः ॥ हृदि बटुकभैरवदेवतायै नमः ॥ ततो मूर्ति न्यासः॥ ह्रीं द्रों रों ईशानाय नमोऽङ्गुष्ठयोः ॥ ह्रीं द्रें रें तत्पुरुषाय नमस्तर्जन्योः । ह्रीं द्रुं रुं अघोराय नमो मध्य मयोः ॥ ह्रीं द्रिं रिं वामदेवाय नमोऽनामिकयोः । ह्रीं द्रं रं सद्योजाताय नमः कनिष्ठयोः ॥ पुनस्तदंगुलीभिः शिरो वदनहृद्गुह्यपादेषु तत्तद्बीजादिकांस्तत्तन्मूर्तीर्न्यसेत् ॥ तथा ऊर्ध्वं प्रागदक्षिणोदीच्यपश्चिमेषु मखेषु च तान्न्य सेत् ॥ तथा च निबंधे ॥ अंगुलीदेहवक्रेषु मूर्तीर्न्यसेद्यथा पुरा ॥ सव्यादिपंचह्रस्वाढ्यं शक्तिबीजपुरस्सरम् ॥ ४८९ ॥ बकारं पंचह्रस्वाढ्यमीशादिषु नियोजयेत् ॥ ततः करांगन्यासौयथा ॥ ह्रां बां अंगुष्ठभ्यां नमः ॥ ह्रां वां हृदयाय नम इत्यादि च षड्दीर्घयुक्तम् ॥ तथा च निबंधे ॥ षड्दीर्वभाजया शक्त्या बकारेण च तद्वता ॥ अंगानि जातियुक्तानि प्रणवाद्यानि कल्पयेत् ॥ ४९० ॥ ततो ध्यानं त्रिधा प्रोक्तं बीजद्वये कुर्यात्सात्त्विकादिप्र भेदतः ॥ सात्त्विकं यथा ॥ वंदे बालं स्फटिकसदृशं कुंतलोद्भासि वक्रं दिव्याकल्पैर्नवमणिमयैः किंकिणीनूपुराद्यैः॥ दीप्ताकारं विशदवसनं सुप्रसन्नं त्रिनेत्रं हस्ताब्जाभ्यां बटुकमनिशं शूलदंडौ दधानम् ॥ ४९१ ॥ राजसं यथा ॥ उद्यद्भास्करसन्निभं त्रिनयनं रक्तांगरागस्रजं स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ॥ नीलग्रीवमुदारकौ स्तुभधरं शीतांशुचूडोज्ज्वलं बंधूकारुणवाससं भयकरं देवं सदा भावयेत् ॥ ४९२ ॥ तामसं यथा ॥ ध्यायेन्नीला द्रिकांतं शशिशकलधरं मुंडमालं महेशं दिग्वस्त्रं पिंगकेशं डमरुमथ सृणिं खड्गशूलाभयानि ॥ नागं घण्टां कपालं करसरसिरुहैर्बिभ्रतं भीमदंष्ट्रं सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किंकिणीनूपुराढ्यम् ॥ ४९३ ॥ सात्त्विकं ध्यानमाख्यातमपमृत्युविनाशनम् ॥ आयुरारोग्यजननमपवर्गफलप्रदम् ॥ ४९४ ॥ राजसं ध्यानमाख्यातं सर्व कामार्थसिद्धिदम् ॥ तामसं शत्रुशमनं कृत्यभूतगदापहम् ॥ ४९५ ॥ एवं ध्यात्वा मानसैः संपूज्य शंखस्था पनं कृत्वा अस्य पूजायंत्रम् ॥ धर्माधर्मादिभिः क्लृप्तपीठे पंकजशोभिते ॥ ४९६ ॥ षट्कोणांतस्त्रिकोणस्थे व्योम पंकजशोभिते ॥४९७॥ ततो मूलेन मूर्तिं संकल्प्य पूर्ववद्ध्यात्वावाहनादिकं कुर्यात् ॥ तत्र क्रमः ॥ मूलादि सद्यो जातमंत्रेणावाहनम् । मूलादिवामदेवेन स्थापनम् ॥ मूलेन सन्निरोधनम् ॥ तत्पुरुषेणयोनिमुद्राप्रदर्शनम् ॥ ईशानेन

चन्दनमिति विशेषः ॥ ततः कर्णिकायां चतुर्दिक्षु कोणेष्वीशानादीन्पूजयेत् ॥ ततो व्योमपंकजदलेषु असितांगादीन् भैरवान्पूजयेत् ॥ ततः षट्कोणेषु पूर्वादितः ह्रां ब्रां हृदयाय नम इत्यादिना षडंगानि पूजयेत् ॥ ततः पूर्वादिक्रमेण डाकिनीशाकिनीलाकिनीकाकिनीहाकिनीमालिनीदेवीपुत्रानष्टदिक्षु यजेत् ॥ उमापुत्रान्रुद्रपुत्रान्मातृपुत्रान्दक्षिणतो यजेत् ॥ ऊर्ध्वमूर्ध्वमुखीपुत्रान् अधः अधोमुखीपुत्रान् तद्बहिरष्टपत्रेषु लोकेशान्बटुरूपान्पूजयेत् ॥ तद्बहिः पूर्वं ब्राह्मीपुत्राय नमः । ईशानेॐमाहेश्वरीपुत्राय नमः । उत्तरेॐवैष्णवीपुत्राय नमः । अनिले ॐ कौमारीपुत्राय नमः । पश्चिमे ॐ इंद्राणीपुत्राय नमः ॥ निर्ऋते ॐ महालक्ष्मीपुत्राय नमः । याम्ये ॐ वाराहीपुत्राय नमः । वायव्ये ॐ चामुंडापुत्राय नमः ॥ तथा च निबंधे ॥ ब्रह्माणीपुत्रकं पूर्वे माहेशीपुत्रमीश्वरे ॥ वैष्णवीपुत्रकं सौम्ये कौमारीपुत्रमानले ॥ तद्बहिः ॥ इन्द्राणीपुत्रकं भूयः पश्चिमे पूजयेत्ततः ॥ महालक्ष्मीसुतं पश्चाद्रक्षोदिशि समर्चयेत् ॥ ४९८ ॥ वाराहीपुत्रकं याम्ये चामुण्डापुत्रमानिले ॥ तद्बहिर्दशदिक्षु हेतुकत्रिपुरांतकवेतालवह्निजिह्वाकालांतककरालकैकपादभीमरूपाचलहाटकेश्वरान्पूजयेत् ॥ ततो योगिनीसहितदिव्ययोगीशाय नमः ॥ एवं योगिनीसहितांतरिक्षयोगिनीशाय नमः ॥ एवं योगिनीसहितभूयिष्ठयोगिनीशाय नमः इति ईशानाग्निनैर्ऋतेषु पूजयेत् ॥ अस्य पुरश्चरणमेकविंशतिलक्षजपः ॥ तथा च ॥ वर्णलक्षं जपेत्मंत्रं हविष्याशी जितेंद्रियः ॥ तद्दशांशं प्रजुहुयात्तिलैर्मधुरसंयुतैः ॥ ४९९ ॥ अथ बलिदानम् ॥ पूर्ववद्दुर्गामाराध्य बलिं दद्यात् ॥ शाल्यन्नं पलसंसर्पिर्लाजचूर्णानि शर्करा ॥ ५०० ॥ गुडैरिक्षुरसापूपैर्मध्वक्तैः परिमिश्रितैः ॥ कृत्वा कवलमाराध्य देवं प्रागुक्तवर्त्मना ॥ ५०१ ॥ रक्तचन्दनपुष्पाद्यैर्निशि तस्मै बलिं हरेत् ॥ यद्वा ॥ अन्यूनांगमजं हत्वा राजसं प्रागुदीरितम् ॥ ५०२ ॥ बलिप्रदानसमये रिपूणां सर्वसैन्यकम् ॥ निवेदयेद्बलित्वेन बटुकाय विशिष्टधीः ॥५०३॥ विदर्भयेच्छत्रुनाम्ना बलिमंत्रं तदा सुधीः ॥ शत्रुपक्षस्य पिशितं रुधिरं च दिने दिने ॥५०४॥ भक्षयस्व गणैः सार्द्धं सारमेयसमन्वितम् ॥ बलिमंत्रोऽयमाख्यातः सर्वेषां विजयप्रदः ॥ ५०५ ॥ अनेन बलिना हृष्टो बटुके रिपुसैनिकम् ॥ सर्वं गणेभ्यो विभजेदामिषं क्रुद्धमानसः॥५०६॥एवं कृते परबलं क्षीयते नात्र संशयः॥५०७॥इति श्रीहरिकृष्णविनिर्मिते बृ. ध. उ. श्रीबटुकोपासनाध्याये श्रीमद्बटुकभैरवपटलनिरूपणं नाम प्रकरणं त्रयोदशम् ॥१३॥

अथ श्रीबटुकभैरवदीपदानम् ॥ उक्तं च शिवागमे ॥ पार्वत्युवाच ॥ देवदेव जगन्नाथ भक्तानुग्रहकारक ॥ दीपदानविधिं ब्रूहि बटुकस्य महात्मनः ॥ १ ॥ महादेव उवाच ॥ नोक्तपूर्वं महेशानि दीपं वै भैरवस्य च ॥ आपत्काले महादेवि दीपयागं समाचरेत् ॥ २ ॥ न तिथिर्न च नक्षत्रं न योगकरणे शशी ॥ न राशिर्न च सूर्यादिग्रहान्नैव विचिंतयेत् ॥३॥ यदा चोत्पद्यते कार्यं दीपं तत्र प्रयोजयेत् ॥ त्रिकोणं चैव षट्कोणमेवं यन्त्रं समुद्धरेत्

॥ ४ ॥ तत्र दीपं प्रतिष्ठाप्य यथोक्तं ध्यानयोगतः ॥ क्रूरकार्येषु सर्वेषु ध्यानं वै तामसं स्मृतम् ॥ ५ ॥ वश्ये विद्वेषणे स्तंभे राजसं परिकीर्तितम् ॥ सात्त्विकं सर्वकार्येषु ध्यानभेदः प्रकीर्तितः ॥ ६ ॥ पात्रस्य वर्तिकायाश्च मानं तैलस्य सुंदरि ॥ पलैः षोडशकैः पात्रमर्द्धं तैलस्य भामिनि ॥ ७ ॥ वर्तिमानं महेशानि तंतुषोडशकैः शुभैः ॥ सौवर्णं राजतं ताम्रं दीपपात्रं प्रशस्यते ॥ ८ ॥ त्रिषष्टिपलमान स्यान्महत्कार्ये विशेषतः ॥ प्रयोगेषु च सर्वेषु लोहपात्रं प्रशस्यते ॥ ९ ॥ मारणोच्चाटने चैव मानमेतत्प्रकीर्तितम् ॥ आसने उपविश्याथ सम्यग्वै कृष्ण कंबले ॥१०॥ तद्दिनात्तद्दिनं यावत्तावदष्टोत्तरं शतम् ॥ पार्वत्युवाच ॥ यः सूचितो पुरा नाथ विधिर्वै बटुकस्य च ॥ ११ ॥ तं ब्रूहि येन देवेश षट्कर्माणि प्रसादयेत् ॥ ईश्वर उवाच ॥ अथातः संप्रवक्ष्यामि बटुकस्य वरानने ॥ १२ ॥ दीपदानं सर्वकार्यसाधनं प्रत्ययावहम् ॥ चरतुस्रां भुवं सम्यक्कल्पयेत्सुरवंदिते ॥ १३ ॥ गोमये नोपलिप्याथ मंडलं रचयेत्ततः ॥ कीलाष्टकं चाष्टदिक्षु दद्यात्सूत्रेण वेष्टयेत् ॥ १४ ॥ कीलानि क्षीरवृक्षस्य कार्याणि कुलसुंदरि ॥ तेषु कीलेषु विधिवद्बलिं दीपसमन्वितम् ॥ १५ ॥ पूर्वादिपूजितं रक्तचंदनैः करवीरजैः ॥ ह्रीं जयंताय कुसुमैर्ह्रीं मे घोराय सुंदरि ॥ १६ ॥ ह्रीं चामीकराय तथा ह्रीं प्रसिद्धाय वै नमः ॥ ह्रीं तीक्ष्णाय प्रचंडाय करालाय कपालिने ॥१७॥ तंत्रांतरे ॥ जयंतश्चाथ घोरोऽथ चामीकरसितांगकौ ॥ भीषणश्च प्रचण्डश्च करालश्च कपालकः ॥१८॥ नमस्कृत्य गणेशानं गुरुं क्षेत्रेशमेव च ॥ तन्मध्ये विलिखेत्स्पष्टं रक्तचंदनवारिणा ॥१९॥ चतुरस्रसमं बाह्ये तन्मध्ये तु षडस्रकम् ॥ तन्मध्ये त्र्यस्रमालिख्य तत्र देवं विचिंतयेत् ॥ २० ॥ तंडुलैः पूरयित्वा तु रक्तचंदनलोहितैः ॥ पीठपूजां विधायाथ पात्रं संस्थाप्य तत्र वै ॥२१॥ तत्तत्कार्यवशाद्देवि तत्तद्द्रव्यं प्रपूरयेत् ॥ गव्यमाकर्षणे कृत्ये कौसुंभं स्तंभने स्मृतम् ॥ २२ ॥ तिलतैलं तथा गव्यं घृतं वश्ये प्रकल्पयेत् ॥ कटुतैलं द्वेषणे च मारणे राजिकं स्मृतम् ॥ २३ ॥ आज्यं चौष्ट्रं माहिषं च मैषमुच्चाटने मतम् ॥ अथवा तिलतैलं तु सर्वकार्ये प्रशस्यते ॥ २४ ॥ बन्दीबंधनमोक्षे च तथा भूतपिशाचके ॥ सार्पिषं तैलमापूर्य दीपदानं विधीयते ॥२५॥ शतमष्टोत्तरं चाथ पलानि प्रथमे विधौ ॥ अष्टाशीतिर्द्वितीये च परेष्टाविंशतिः प्रिये ॥ २६ ॥ सर्वकार्येषु देवेशि संख्या प्रोक्ता त्रिधात्र वै ॥ शुभकार्ये ताम्रमयं विपरीते तु लोहजम् ॥२७॥ शुभे सौम्यमुखो दीपो ह्यशुभे दक्षिणामुखः ॥ शतेन त्रिशतेनाथ सहस्रेणाथ वर्तिकाम् ॥ २८ कारयित्वा शुभे पात्रे संस्थाप्य ज्वालयेत्तथा ॥ दीपं सम्यक्प्रपूज्याथ तत्र संकल्पमाचरेत् ॥२९॥ प्रणवं पूर्वमुद्धृत्य ततो लज्जां रमामथ ॥ कामं लज्जां रमामों च सर्वज्ञेतिपदं ततः ॥३०॥ ङेऽन्तं तथा च चंडेति पराक्रमपदं ततः॥ ङेऽन्तं बटुकमुद्धृत्य इमं दीपं ततो वदेत्॥३१॥ प्रगृह्णाण चिंतितं च सर्वकार्याणि साधयेत् ॥ दुष्टान्नाशय युग्मांते त्रासयेतिपदं द्विधा ॥ ३२ ॥ सर्वतो मम रक्षां च कुरु युग्मं च वर्म च ॥ अष्टमग्निवधूप्रोक्तो दीपदाने मनुस्त्वयम् ॥३३॥ तंत्रांतरे ॥ प्रणवं पूर्वमुच्चार्य मायां वाणीं ततो वदेत्॥ 

कमलाकामवाणीं च सर्वज्ञाय ततो वदेत् ॥ ३४ ॥ प्रचंडपराक्रमाय बटुकाय स्वरूपकम् ॥ कार्याणि साधय द्वंद्वं दुष्टान्नाशय नाशय ॥ ३५ ॥ सर्वतो मम रक्षां च कुरु द्वंद्वं हुं फट् स्वाहा ॥ अनेन मनुना देवि गृह्य पुष्पा क्षतं जलम् ॥ ३६ ॥ बटुकाय इमं दीपं निवेदयामि संवदेत् ॥ प्रतिष्ठां पूजनं सांगं बलिं देवाय दापयेत् ॥ ३७ ॥ तेन दीपं परिज्वाल्य बटुकाय बलिं हरेत् ॥ तैलाभ्यंगं पुरा कृत्वा बटुकं भोजयेत्ततः ॥ ३८ ॥ दधि दुग्धघृताद्यैश्च वटकैः स्नेहपाचितैः ॥ न वदेदशुभं वाक्यं यावद्दीपस्य साधनम् ॥ ३९ ॥ अथान्यदपि वक्ष्यामि साधनं परमाद्भुतम् ॥ वश्ये विद्वेषणे स्तंभे कर्तव्योयं सुरेश्वरि ॥ ४० ॥ कन्यार्थी च सुतार्थी च दीपं प्रज्वालयेत्ततः ॥ दीपनाशे पुनर्दीपं कृत्वा शांतिं तु कारयेत् ॥ ४१ ॥ गणेशान्बटुकान्कन्या भोजयेद्विघ्नशांतये ॥ पंचवर्षा भवेत्कन्या नववर्षो गणेश्वरः ॥ ४२ ॥ षट् चाष्टौ बटुकः साक्षान्नारी स्यात्षोडशाब्दिका ॥ ततो शांति स्तुतिं कुर्याद्बटुकस्य महात्मनः ॥ ४३ ॥ यस्यार्चनेन विधिना किमपीह लोके कर्म प्रसिद्धमिति नाम फलं प्रसूते ॥ द्वैजं च तत्सकलसाधकचित्तवृत्तिं चिंतामणिं सुरगणाधिपतिं नमामि ॥ ४४ ॥ रक्तांबरं ज्वलन पिंगजटाकलापं ज्वालीवलाकुटिलचंडधरप्रचंडम् ॥ बालार्कसुद्युतिकमुत्पलधातुवर्णं देवीसुतं बटुकनाथमहं नमामि ॥ ४५ ॥ हरतु कुलगणेशो विघ्नसंघानशेषान्नयतु कुलसपर्यां पूर्णतां साधकानाम् ॥ पिबतु बटुकनाथः शोणितं निंदकानां दिशतु सकलकामाँल्लौकिकान्वो गणेशः ॥ ४६ ॥ अयं दीपविधिः प्रोक्तो बटुकस्य तवानघे ॥ गोपनीयः प्रयत्नेन सत्यं सत्यं वदाम्यहम् ॥ ४७ ॥ अन्यत्र विशेषः ॥ दीपस्य दक्षिणे भागे दक्षिणाग्रामधोमुखीम् ॥ छुरिकां निखनेद्भूमौ शत्रुपक्षनिबर्हणीम् ॥ ४८ ॥ षोडशांगुलविन्यासां शलाकां स्वर्णनिर्मिताम् ॥ दीपस्य दक्षिणे भागे स्थापयेत्साधकोत्तमः ॥ यथा कामस्तथा ध्यानं कारयेत्साधकोत्तमः ॥ ४९ ॥ अथ जयद्रथयामलमतमनुसृत्य श्रीरामचंद्राचार्यः ॥ एवं दीपविधिः प्रोक्तो ह्यावरणानि प्रपूजयेत् ॥ ५० ॥ बटुकाष्टकमष्टासु दिक्षु वै भैरवाष्टकम् ॥ राकिन्यादिभवेत्यष्टौ परिवाराष्टकं ततः ॥ ५१ ॥ गणाश्चाष्टौ शक्तयश्च ह्यष्टौ पूज्या विशेषतः ॥ अंबाश्चाष्टौ पादुकाश्चाष्टौसायुधवाहनास्तथा ॥ ५२ ॥ परिवारसमायुक्ताः सपुत्राश्च सपत्निकाः ॥ सर्वान्देवान् प्रपूज्याथावरणेन समन्वितान् ॥ ५३ ॥ मध्ये तु पूजयेद्देवं बटुकं दीपमध्यतः ॥ पंचोपचारैः सम्पूज्य धूपदीपादिभिः क्रमात् ॥ ५४ ॥ कवचं स्तवराजं च आपदुद्धरणं जपेत् ॥ स्तवराजं च कवचं दीपाग्रे प्रपठेत्पुनः ॥ ५५ ॥ मन्त्रं लक्षं जपेद्देवि कवचमयुतं पठेत् ॥ सहस्रं स्तवराजं च कार्यमुद्दिश्य मन्त्रवित् ॥ ५६ ॥ कलौ चतुर्गुणं प्रोक्तं दीपाग्रे प्रपठेत्सदा ॥ सूर्यास्तकालमारभ्य यावत्सूर्योदयो भवेत् ॥ ५७ ॥ तावन्मंत्रं जपेद्रात्रौ कार्यमुद्दिश्य मन्त्रवित् ॥ आदौ तु बलिदानं वै पाठहोमादिकं ततः ॥ ५८ ॥ होमांते च जपांते च पुनर्बलिं समुद्धरेत् ॥ अष्टमीदिनमारभ्य यावत्कृष्णा चतुर्दशी ॥ ५९ ॥ ताव

न्मन्त्रं जपेद्रात्रौ सर्वकार्यप्रसाधनम् ॥ नदीतीरे शिवागारे बिल्वमूले गिरौ तथा ॥ ६० ॥ गुहायां सिद्धपीठे च सन्निधौ भैरवस्य च ॥ पुत्रप्राप्तिः सहस्रे स्याद्द्विगुणे च धनागमः ॥ ६१ ॥ त्रिगुणे बन्धनान्मुक्तिः चतुःसंख्ये प्रियागमः ॥ बाणसंख्ये स्तंभनं स्याद्रससंख्ये क्षयो भवेत् ॥ ६२ ॥ सप्तसंख्ये जगद्वश्यमष्टसंख्ये तु मोहनम् ॥ अंकसंख्ये महोत्साह उच्चाटो दशसंख्यके ॥ ६३ ॥ एकादशेन देवेशि ह्यखिलाः सिद्धयः स्मृताः ॥ लक्षेणैकेन देवेशि चक्रवर्ती भवेद्ध्रुवम् ॥ ६४ ॥ कोटिसंख्ये महादेवि भवेद्भैरवसन्निभः ॥ नौकाया व्यवहारे च जपेत्सप्तशतं तथा ॥ ६५ ॥ कृषिकर्मणि वाणिज्ये रुद्रसंख्याशतानि च दीपाग्रे कलशाग्रे च त्रिकोणे रसकोणके ॥ ६६ ॥ अणिमाद्यष्टसिद्धीनां पूजनं परिकीर्तितम् ॥ अष्टदिक्षु ततः कुर्याद्भूतानामपसर्पणम् ॥ ६७ ॥ वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः ॥ अपसर्पंतु ते सर्वे यावत्पूजां करोम्यहम् ॥ ६८ ॥ गोमयेनोपलिप्तायां भूमौ मंडलमालिखेत् ॥ त्रिकोणं रसकोणं च ह्यष्टकोणं च भूपुरम् ॥ ६९ ॥ एवं मंडमालिख्य दीपपात्रं हि स्थापयेत् ॥ दीपपात्रे च पूर्वोक्तं यंत्रं सँलिख्य मन्त्रवित् ॥ ७० ॥ बीजं विलिख्य तन्मध्ये वर्तिं तैलं च निक्षिपेत् ॥ घृतं वा पूरयेद्विद्वाँस्ततो दीपं प्रबोधयेत् ॥ ७१ ॥ ततो दीपस्य प्राणानां प्रतिष्ठापनमाचरेत् ॥ पंचोपचारैर्बटुकं पूजयेत्तत्र मानवः ॥ ७२ ॥ दीपस्य कलशे तत्र कुर्यादावरणार्चनम् ॥ बलिदानं ततः कार्यं दीपस्य प्रार्थना ततः ॥ ७३ ॥ दीपाग्रे च यथाशक्ति गायत्रीं बटुकस्य च ॥ जपेद्दीपं समर्प्याथ कवचं प्रजपेत्ततः ॥ ७४ ॥ मन्त्रं जप्त्वा पुनर्वर्म पठेन्मंत्रं ततः परम् ॥ स्तवराजं पठित्वा तु मन्त्रं जप्त्वा निवेदयेत् ॥ ७५ ॥ महाभैरवतन्त्रमनुसृत्याह ॥ पुरुषोत्तमपादाब्जश्रीब्रह्मार्पितमौलिना ॥ क्रियते रामचन्द्रेण दीपदानविधिः शुभः ॥ ७६ ॥ तत्र शुद्धकालः ॥ वैशाखश्रावणाश्विनकार्त्तिकादिकपंचके ॥ शुक्लेपक्षे प्रकर्त्तव्या यावत्कृष्णा च पंचमी ॥ ७७ ॥ सप्तमी पूर्णिमा चैव द्वितीया पंचमी तथा ॥ त्रयोदशी च दशमी तृतीया प्रतिपत्तथा ॥ ७८ ॥ द्वादशी च तथा षष्ठी ह्येता स्युस्तिथयः शुभाः ॥ सौभाग्यशोभनायुष्मान्सुकर्मांधृतिप्रीतयः ॥ ७९ ॥ वृद्धिवैधृतिपाताश्च एते योगाः शुभाः स्मृताः ॥ बालवं कौलवं चैव गरं चेति शुभानि वै ॥ ८० ॥ ग्रीष्मं विना शुभा पंच ऋतवः प्ररिकीर्तिताः ॥ मासद्वयात्मकाः श्रेष्ठा दिनं दिनार्धमेव च ॥८१॥ सूर्योदयं समारभ्य यावदस्तं गतो रविः ॥ अहोरात्रप्रमाणेन ग्रीष्मादिः परिकीर्त्तितः ॥ ८२ ॥ दिवा पूर्वाह्णकः कालो रात्रौ निशीथ एव च यद्वा सर्वत्र रात्रौ तु सूर्यचन्द्रोपरागयोः ॥ ८३ ॥ अर्द्धोदये महाष्टम्यां कालमोहश्च रात्रिके ॥ अथ पात्रस्य धातुमानम् ॥ सौवर्णं सिद्धिदं पात्रं वश्ये रोप्यं कल्पयेत् ॥ ८४ ॥ विद्वेषणकरं लोहं मारणे मृन्मयं तथा ॥ उच्चाटनकरं कांस्यं मोहे पित्तलजं स्मृतम् ॥ ८५ ॥ अत्रोक्तं सर्वकार्येषु सर्वाभावे तु ताम्रजम् ॥ अथ सूत्रमानम् ॥ श्वेतं शांतौ तथा पीतं स्तंभे वश्ये तु रक्तकम् ॥ ८६ ॥ मांजिष्ठ

द्वेषणे प्रोक्तं मारणे कृष्णसूत्रकम् ॥ सर्वाभावे महादेवि श्वेतसूत्रं प्रशस्यते ॥ ८७ ॥ अथ वर्त्तिमानम् ॥ एका पंच तथा सप्त एकविंशतिसंख्यया ॥ अयुग्माथ प्रकर्त्तव्या युग्मां नैव तु कारयेत् ॥ ८८ ॥ वर्त्तिरेका प्रकर्त्तव्या तिस्रो वा वर्त्तयस्तथा ॥ अथ घृततैलमानम् ॥ गोघृते सर्वसिद्धिः स्यान्माहिषं मारणे स्मृतम् ॥ ८९ ॥ उष्ट्रीयं द्वेषणे प्रोक्तं गाडरं शांतिकर्मणि ॥ आजमुच्चाटने कार्यं सर्वाभावे च गोघृतम् ॥ ९० ॥ घृताभावे भवेत्तैलं दीपं दाने विशेषतः घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ॥ ९१ ॥ वसामेदोद्भवं तैलं प्रयत्नेन विवर्जयेत् ॥ अथ पात्रमानम् ॥ विंशत्पलमितं पात्रं बुध्नोच्छ्राये षडंगुलम् ॥ ९२ ॥ विस्तारे अंगुलान्येव षोडश परिकीर्त्तितम् ॥ पंचाशत्पलगर्भं च वश्ये चौर्यादिकर्मणि ॥ ९३ ॥ त्रिंशद्दशपले पात्रे मानं तद्वत्प्रकीर्तितम् ॥ षष्टिपलमिते पात्रे बुध्नोच्छ्राये नवांगुलम् ॥ ९४ ॥ अंगुलानि चतुर्विंशदायामे परिकल्पयेत् ॥ पंचसप्तमिते तैले सर्वशत्रुविनाशनम् ॥ ९५ ॥ द्विपंचाशत्पले पात्रे बुध्नोच्छ्राये तु षष्ठिमत् ॥ शतपलमिते तैले दीपाद्वैरिविनाशनम् ॥ ॥ ९६ ॥ शतपलमिते पात्रे उच्छ्रायो द्वादशांगुलः ॥ द्वात्रिंशच्चैव आयामे तन्मध्ये तु सहस्रकम् ॥ ९७ ॥ सर्वकर्मणि सिद्धिः स्याद्दीपे पलसहस्रके ॥ सपादशतपात्रे च पंचोत्तरशताधिके ॥ ९८ ॥ पंचदशांगुलोच्छ्रायं व्यायामे षट्कत्रिंशके ॥ अयुतपलदीपश्च निगडाद्बंदिमुक्तये ॥ ९९ ॥ सहस्रपलदीपे च बंदिमोक्षः प्रजायते ॥ त्रिंशत्पलमिते पात्रे मान्यं चैव तु पूर्ववत् ॥ १०० ॥ त्रिंशत्पलमिते तैले दिनान्येकोनविंशतिः ॥ कन्याभिकांक्षी तैलेन प्रत्यहं दीपमाचरेत् ॥ १०१ ॥ ईप्सितां लभते कन्यां भैरवस्य प्रसादतः ॥ नृपपलमिते पात्रे उच्छ्रायं च रसांगुलम् ॥ १०२ ॥ विंशत्पलमिते दीपे प्रत्यहं विंशतिर्दिनम् ॥ सर्वरोगविनाशाय क्षयापस्मारदारुणे ॥ १०३ ॥ दशपलमिते पात्रे बुध्नोच्छ्राये तु त्रिंशतम् ॥ दशपलमितं तैलं प्रत्यहं सप्तवासरे ॥१०४॥ राजवश्यकरं क्षिप्रं यदि साक्षाज्जगत्पतिः ॥ त्रिंशत्पलमिते पात्रे बुध्नोच्छ्राये तु पूर्ववत् ॥ १०५ ॥ त्रिंशत्पलमिते तैले क्षुद्ररोगविनाशकृत् ॥ एकादशपलमिते उच्छ्राये तु षडंगुलम् ॥ १०६ ॥ पंचविंशत्पले तैले दीपे भूतादिनाशनम् ॥ एकादशपले पात्रे बुध्नोच्छ्रायं तु पूर्ववत् ॥ १०७ ॥ नृपपलमिते तैले ग्रहपीडानिवारणम् ॥ शतपलमिते पत्रे बुध्नोच्छ्राये तु षोडश ॥ १०८ ॥ व्यायामं तु भवेत्सार्द्धं चतुर्विंशतिरंगुलैः ॥ तन्मध्ये च प्रकर्त्तव्यो दीपः शतत्रयात्मकः ॥ १०९ ॥ सिंहव्याघ्रादिसर्पाणां भयं नैव प्रजायते ॥ एकादशपले पात्रे उच्छ्रायं चैव पूर्ववत् ॥ ११० ॥ अष्टपलघृतो दीपो यात्राकाले प्रकल्पयेत् ॥ तस्य मार्गे भयं नास्ति स्वस्थश्च गृहमाप्नुयात् ॥ १११ ॥ त्रिंशत्पलमिते पात्रे व्यायामे चैव पूर्ववत् ॥ शतपलमिते दीपे मेधारोग्यविवर्धनम् ॥ ११२ ॥ नित्यदीपप्रमाणे तु पात्रं पलत्रयं स्मृतम् ॥ बुध्नोच्छ्राये भवेत्सार्द्धमंगुष्ठोदरमध्यगः ॥ ११३ ॥ तन्मध्ये तु भवेत्तैलं यथाकामनया सुधीः ॥ पलमात्रं पलार्द्धं वा दीपं प्रज्वालयेत्सुधीः ॥ ११४ ॥ अंगुष्ठोदरचत्वारि व्यायामः परिकीर्तितः ॥ एका वर्तिः प्रकर्त्तव्या एक

विंशतितंतुभिः ॥ ११५ ॥ पात्रे मध्ये मंडलं तु कुर्याद्वा साधकोत्तमः ॥ षट्कोणांतस्त्रिकोणस्थां मध्ये मायां प्रकल्पयेत् ॥ ११६ ॥ तन्मध्ये च भवेद्वर्तिस्ततो दीपं प्रकल्पयेत् ॥ भूतशुद्धिः प्रतिष्ठा च ऋष्यादि च षडंगकम् ॥११७॥ मातृकान्यासपूर्वं हि ततो बलिं समुद्धरेत् ॥ आवरणार्चनकं कुर्यान्मध्ये देवं प्रपूजयेत् ॥ ११८ ॥ दिक्पालाँल्लोकपालांश्च समग्रपरिवारतः ॥ सवाहनान्सायुधांश्च पत्नीपुत्रादिभिर्युतान् ॥ ११९ ॥ अपसर्पणपूर्वं हि सर्वत्र पूजनं चरेत् ॥ धूपदीपादिनैवेद्यैस्तांबूलारार्तिकादिभिः ॥ १२० ॥ यदक्षरपदेनैव सर्वपापं क्षमस्व मे ॥ कवचं स्तवराजं च दीपाग्रे प्रपठेत्सुधीः ॥ १२१ ॥ ततो मंत्रजप कुर्याद्देवताय समर्पयेत् ॥ यं यं चिंतयते कामं तं तं प्राप्नोति निश्चितम् ॥ १२२ ॥ स्तवराजशतेनैव फलमाप्नोति मानवः ॥ स्तवराजसहस्रेण लभेद्वै वांछितं फलम् ॥ १२३ ॥ एकादशसहस्रेण तस्य सिद्धिरनेकधा ॥ संपुटस्तवराजेन मंत्रस्याष्टोत्तरं शतम् ॥ १२४ ॥ पुरश्चरणं तु यः कुर्यादेकादशसहस्रकम् ॥ यं यं चिंतयते कामं तं तं प्राप्नोति मानवः ॥ १२५ ॥ होमादौ च जपादौ च बलिदानं प्रकल्पयेत् ॥ होमांते च जपांते च बलिद्वयं सुसिद्धिदम् ॥ १२६ ॥ रुद्रयामले विशेषः ॥ बिंदोस्त्रिकोणं षट्कोणं वृत्ताष्टदलकं तथा ॥ दलानि षोडशान्येव चतुरस्रं ततः परम् ॥ १२७ ॥ एवं यंत्रं समालिख्य तत्र संपूज्य देवताः ॥ तस्योपरि दीपपात्रं स्थापयेत्साधकोत्तमः ॥ १२८ ॥ तैलं घृतं वा वर्त्तिं च स्थाप्य दीपं प्रबोधयेत् ॥ तैलवर्तिस्थापने तु इमं मंत्रं समुच्चरेत् ॥ १२९ ॥ "ॐ नमो भगवते बटुकभैरवाय देवीपुत्राय सर्वदुष्टजनमुखस्तंभं कुरु कुरु ॐ ह्रां ह्रींहूं ठः ठः ठः हुं फट्ट स्वाहा" ॥ इत्यनेनाष्टवारं तदाभिमंत्र्य निधापयेत् ॥ मूलमंत्रेण तं दीपं ततः प्रज्वालयेत्सुधीः ॥१३०॥ दीपार्पणे तु यो मंत्रः स तु पूर्वमुदीरितः ॥ त्रिवारं तं समुच्चार्य देवाय दीपमर्पयेत् ॥ १३१ ॥ मूलमंत्रं ततः किंचिज्जप्त्वा बलिं समर्पयेत् ॥ माषान्नं माषभक्तं वा पात्रे चैव सदीपकम् ॥ १३२ ॥ पायसान्नं मोदकं च चणकादीनि निक्षिपेत् ॥ शंखोदकेन संप्रोक्ष्य धेनुमुद्रां प्रदर्श्य च ॥ १३३ ॥ अमृतीकरणं कृत्वा गधादिभिश्च पूजयेत् ॥ बलिनिवेदनं मंत्रं त्रिवारं च पठेन्नरः ॥ १३४ ॥ बलिपात्रस्याधोभागे त्रिकोणं रसकोणकम् ॥ चतुरस्रं मंडलं वै कृत्वा पात्रं निधापयेत् ॥ १३५ ॥ बलिनिवेदनमंत्रः ॥ " ॐ ह्रीं बटुकनाथ देवीपुत्र कपिलजटाभारलसद्भास्वर त्रिनेत्रज्वालामुखरित सर्वविघ्नान्निवारय २ सर्वजनवशमानय २ सकलशास्त्रच्छंदोनिबद्धां वाणीं मे कुरु २ इमं यथोपकल्पितं बलिं गृह्ण २ ई ब्राँ ब्रीं ब्रूँ ब्लाँ ब्लूँ बलिं गृह्ण २ सिद्धिं देहि २ हुं फट् स्वाहा" ॥ १३६ ॥ तस्मिन्दीपे महेशानि ध्यात्वा बटुकभैरवम् ॥ छुरिकास्थापनं कृत्वा बलिदानं समाचरेत् ॥ ॥ १३७ ॥ दीपाग्रे त्वशुभां वाणीं पतितस्य च दर्शनम् ॥ अस्पर्शानिष्ठवचनमधोवातविसर्जनम् ॥ १३८ ॥ वर्जयेच्च प्रयत्नेन सावधानः सदा शुचिः ॥ मार्जारमूषकादिभ्यो जंतुभ्यः साधकोत्तमः ॥ १३९ ॥ दीपरक्षां प्रकुर्वीत

नोचेदापदमाप्नुयात् ॥ अथ पुष्पांजलिं दद्यान्मंत्रेणानेन पार्वति ॥ १४० ॥ अनेन दीपवर्येण पश्चिमाभिमुखेन च ॥ यथाविधि कृतेनात्र पूर्णाः संतु मनोरथाः ॥ १४१ इत्थं संपूज्य विधिवत्प्रणमेच्च कृतांजलिः ॥ इति पुष्पांजलिं दद्यात्साधकोत्तमसिद्धिदम् ॥ १४२ ॥ शृणु देवि प्रवक्ष्यामि महादीपविधिं शुभम् ॥ अभिचारे त्रयं कुर्याद्दक्षिणोत्तरपश्चिमे ॥ १४३ ॥ पुष्पावासिततैलं च सर्वकामफलप्रदम् ॥ तिलतैलं श्रियो हेतुः पथिकागममं प्रति ॥१४४॥ अलसीतैलमुद्दिष्टं वश्यकर्मणि निश्चितम् ॥ सार्षपं रोगनाशाय मारणे राजिकोद्भवम् ॥१४५॥ उच्चाटने करंजोत्थं विद्वेषे मधुवृक्षजम् ॥ गोघृतेन कृते दीपे देवतां वशमानयेत् ॥१४६॥ इति तैलमानम् ॥ अथ पात्रमानम् ॥ गोधूमाश्च तिला माषा मुद्गाश्च तंडुलाः क्रमात् ॥ पञ्चधान्यमिदं प्रोक्तं सर्वदा दीपदापने ॥ १४७ ॥ वश्ये तंडुलपिष्टोत्थं मारणे माषपिष्टजम् ॥ तिलपिष्टसमुद्भूतमुच्चाटनविधौ स्मृतम् ॥ १४८ ॥ प्रियस्यागमने प्रोक्तं गोधूमोत्थं सतंडुलम् ॥ मोहने मुद्गजं प्रोक्तं पात्रद्रव्यमनुक्रमात् ॥ १४९ ॥ सौवर्णं राजतं वापि ताम्रजं वापि शक्तितः ॥ पलत्रयमितं देवि नित्यं दीपे प्रकीर्तितम् ॥ १५० ॥ शतसंख्ये महादीपे पात्रं युग्मशरैः स्मृतम् ॥ सहस्रपलदीपे तु पात्रं शतपलैः स्मृतम् ॥१५१॥ घृतायुतपले पात्रं स्मृतं पञ्चशतैः कृतम् ॥ तत्तत्कार्यविभेदेन पात्रं कुर्याद्यथाविधि ॥ १५२ ॥ वश्ये भये विषादे च शस्त्रसंग्रामसंकटे ॥ द्यूते सैन्ये स्तम्भने च विद्वेषोच्चाटमारणे ॥ ॥ १५३ ॥ मयोक्तविधिना दीपः कर्त्तव्यो भैरवस्य तु ॥ पश्चिमाभिमुखः स्थाप्यो महादीपो महेश्वरि ॥ १५४ ॥ साधयेत्सर्वकार्याणि साधकस्य न संशयः ॥ अथ वारपरत्वेन बलिदानम् ॥ रविवारे पायसान्नं सोमवारे च मोदकम् ॥ १५५ ॥ भौमे गुडाज्यगोधूमा बुधे च दधिशर्करा ॥ गोधूमपूरिका युक्ता घृतमध्ये सुपाचिताः ॥ ॥१५६॥ गुरौ चणकखंडाज्यं केवलं चणकं भृगौ॥ शनौ माषान्नतैलं च इति वारबलिः क्रमात् ॥ १५७ ॥ पटले ॥ दीपं प्रज्वाल्य देवेशि बटुकाय बलिं हरेत् ॥ त्रिराचम्य च मन्त्रैश्च हस्तं प्रक्षाल्य वै तदा ॥ १५८ ॥ हस्ते जलं ततो गृह्य विनियोगं पठेत्प्रिये ॥ ततो न्यासं प्रकुर्वीत ध्यानं कुर्यात्ततः परम् ॥ १५९ ॥ ध्याने पूर्वोक्ताद्विशेषः ॥ सात्त्विकं ध्यानमाख्यातं प्रागेव तव सुव्रते ॥ इदानीं राजसं ध्यानं शृणु वक्ष्ये सुरेश्वरि ॥ १६० ॥ उद्यत्सूर्यसहस्राभं त्रिनेत्रं चन्द्रशेखरम् ॥ रक्तांगरागमारक्तं माल्यांबरविभूषितम् ॥ १६१ ॥ स्मेराननं नीलकण्ठं नानाभरण वश्यताम् १७८ ॥ माहिषेण घृतेनेह शत्रुनाशो भवेद्ध्रुवम् ॥ अजाघृतस्य दीपेन शत्रुभंगो भवेदिह ॥ १७९ ॥ निर्गुंडीतैलदीपेन शत्रुसेना पराङ्मुखी ॥ एरंडीतैलदीपेन भोगवाञ्जायते नरः ॥ १८० ॥ जातीतैलेन दीपेन राजमान्यो भवेच्छुभः ॥ कपिलाया घृतेनैव भोगवाञ्जायते नरः ॥ १८१ ॥ वातुलतंत्रे ॥ पात्रं तु त्रिपलारभ्य शतसंख्यावधि क्रमात् ॥ त्रिपंचसप्तनवभिः पात्रं कुर्याद्विचक्षणः ॥ १८२ ॥ द्वात्रिंशत्पलसंख्याकं तैलं तत्र तदर्द्धकम् ॥ चतुर्विंशतिसंख्याकैस्तंतुभिर्वर्तिका भवेत् ॥ १८३ ॥ मारणोच्चाटने चैव मानमेतत्प्रकीर्तितं

तम् ॥ शत्रुगृहीतराज्यस्य पुनः प्राप्ते च सुंदरि ॥ १८४ ॥ पलानां शतसंख्याकं पात्रं तत्र प्रकल्पयेत् ॥ तदर्द्धं तंतुभिर्वर्तिः स्नेहं तस्माच्चतुर्गुणम् ॥ १८५ ॥ कन्यार्थी तु महादेवि दीपं प्रज्वाल्य यत्नतः ॥ अशीतिपात्रमानं च तदर्धं तैलवर्तिकाः ॥ १८६ ॥ एकादशपलैः पात्रं भूतोपद्रवनाशने ॥ महारोगभये प्राप्ते द्वात्रिंशत्पलसंख्यया ॥ १८७ ॥ एकादशं षोडशं च विंशतिपलसंख्यकम् ॥ चतुर्विंशच्च द्वात्रिंशच्चत्वारिंशत्प्रकीर्तितम् ॥ १८८ ॥ अशीतिशतमानं च तथा चाष्टोत्तरं शतम् ॥ पात्रमानं प्रकर्त्तव्यं कार्यभेदेन सुंदरि ॥ १८९ ॥ नित्यदीपे त्रिपलं पात्रं त्रिपलं स्नेहमीरितम् ॥ अष्टाशीतिपलैः पात्रं तथाष्टाविंशति प्रिये ॥ १९० ॥ वर्तिश्चैव तथा कार्या शतमेकादशैव तु ॥ सहस्रतंतुभिर्वापि त्रिशतं शतमेव वा ॥ १९१ ॥ चत्वारिंशच्च पंचाशत्तथाष्टाविंशति प्रिये ॥ एकविंशति तंतुभिर्वर्त्तिः कार्या वरानने ॥ १९२ ॥ कौसुम्भं कर्बुरं श्वेतं रक्तं पीतं च श्यामकम् ॥ श्वेतं तु सर्वकार्येषु प्रशस्तं सूत्रमीरितम् ॥ १९३ ॥ किं च ॥ वेदिकायां लिखेद्यन्त्रं ततः कीलाष्टकार्चनम् ॥ दीपपात्रं च संस्थाप्य तैलवर्तिसमन्वितम् ॥ १९४ ॥ दीपं प्रज्वाल्य मंत्रेण प्राणस्थापनमाचरेत् ॥ भैरवं तत्र संपूज्य सांगावरणकं प्रिये ॥ १९५ ॥ बलिं दत्त्वा विधानेन तदग्रे स्थापयेद्घटम् ॥ ताम्रं वापि सुवर्णं वा जलेनापूर्य मंत्रवित् ॥१९६॥ वेदोक्तेन विधानेन सप्तधान्यादिपल्लवैः ॥ तस्योपरि न्यसेत्पूर्णपात्रं तस्योपरि न्यसेत् ॥ १९७ ॥ यंत्रं वै भैरवस्याथ पूजयेच्च यथाविधि ॥ सांगं सावर्णकं देवं पूजयेच्च विचक्षणः ॥ १९८ ॥ बलिं दत्त्वाथ नीराज्यं तदग्रे जपमाचरेत् ॥ स्तोत्रपाठादिकं सर्वं पुरश्चरणमाचरेत् ॥ १९९ ॥ कार्यस्य चानुसारेण ब्राह्मणान्वृणुयात्प्रिये ॥ पंच सप्त तथाष्टौ वा एकादशावधिस्तदा ॥ २०० ॥ तान्सर्वान्भक्ष्यभोज्यैश्च वस्त्रैश्चैव मनोहरैः ॥ आसनोदकपात्रैश्च पूजयित्वा प्रणम्य च ॥ २०१ ॥ आचार्यमग्रतः कृत्वा दीपकार्ये नियोजयेत् ॥ आसने चोपविश्याथ तैरेव ब्राह्मणैः शुभैः ॥ २०२ ॥ यावद्दीपसमाप्तिः स्यादशुभं नैव भाषयेत् ॥ दधियुक्तैश्च चणकवटकैः स्नेहपाचितैः ॥ २०३ ॥ अपूपैर्मधुसंयुक्तैर्बलिर्देयो दिनेदिने ॥ दीपनाशे पुनर्दीपं कृत्वा शांतिं समाचरेत् ॥ २०४ ॥ वमने च तथा शब्दे फट्कारे चट्चटे घटे ॥ एवं जाते कृता शांतिः शुभं भवति नान्यथा ॥ २०५ ॥ मद्यमांसादिभिर्देयो भैरवस्य बलिः प्रिये ॥ छागादिभिर्बलिर्देयः शांतिस्तोत्रं पठेत्सुधीः ॥२०६ ॥ साधकान्भोजयेत्पश्चान्नरनारीश्च कन्यकाः ॥ गणेशान्बटुकांस्तत्र भोजयेद्विघ्नशांतये ॥ २०७ ॥एवं संतोष्य विधिवच्छांतिस्तोत्रं पठेत्सुधीः ॥ अथ बलिदानमंत्रः ॥ "पशुपाशाय विद्महे शिरश्छेदाय धीमहि ॥ तन्नः पशुः प्रचोदयात् ॥२०८॥ ॐ अलिपिशितमांसान्नबलिं गृह्ण २ मां रक्ष २ हुं दुंदुर्गायै नमः अलिपिशितमांसान्नबलिं गृह्ण २ शत्रुपक्षस्य रुधिरं पिशितं दिनेदिने भक्षय २ गणैः सार्द्धं सारमेयसमन्वितः सर्वगणेभ्यो नमः आमिषं गृह्ण २ भक्षय २ मां रक्ष २ स्वाहा" ॥ २०९ ॥ अथ दीप

दानप्रयोगः ॥ तत्रात्मनो यजमानस्य चंद्रतारानुकूले शुभेऽह्नि तिथिवासरलग्नेषु त्वरितकार्यं चेदमृत घटीषु शुभहोरायां वा दीपारंभं कुर्यात्स च ग्रहणे सक्रांतौ कृष्णाष्टम्यां दुर्गोत्सवेऽर्धोदयादिमहापर्वसु कृतस्ता त्कालिकफलप्रदो भवति ॥ अथ दीपदानसंभाराः ॥ कपिलगोमयं चिंचाद्याम्लद्रव्यं यथाकामनया दीप पात्रं यथोक्तमाज्यं तैलं वा यथोक्तवर्तयः शीघ्रकार्ये पात्रपल ६४ द्रव्यपल १०८ तंतु १००० ॥ द्वितीयपक्षे पात्रपल ३२ द्रव्यपल ८८ तंतु ३०० ॥ मध्यमप्रकारे पात्रपल १६ द्रव्यपल २८ तंतु १०० ॥ कनिष्ठपक्षे पात्र पल ८ द्रव्यपल ८ तंतु १६ ॥ नित्यदीपे पात्रपल २ द्रव्यपल १ तंतु २१ ॥ शुभे दीपमुखमुत्तरे—साधकः पूर्वा भिमुखः आधारयंत्रमुखमुत्तरे ॥ अशुभे दीपयंत्रसाधकानां मुखं दक्षिणे ॥ नित्ये षडंगुलानि ६ कीलानि नैमित्तिके द्वादशांगुलानि कीलानि८ ॥ दीपाग्रे प्रथमकीलपूजनं दक्षिणावर्त्ते ॥ दीपिका ८ कीलं प्रत्येकस्यामेकम् ॥ वशीकरणे मोहने २ शुभावहाः ॥ मारणोच्चाटने आकर्षणे विद्वेषणे ४ अखंडतंदुलाः रक्तचंदनं करवीरादि कुसुमानि रक्तक्षौमं तीक्ष्णछुरिकां पंचगव्यं स्वर्णादिशलाकां सदशवासोयुगलानि नारिकेलबिल्वफलं चंदनं ताम्र कुंभः पूगीफलानि अष्टगंधं यंत्रं पत्रं शरावः स्वादुफलानि पंचपल्लवाः कुंकुमसिंदूरादिपूजासामग्री ब्राह्मणानां वर णसामग्री नित्यदक्षिणा पात्रमिति सामग्री ॥ तत्र शकुनानि निरीक्ष्य दीपदानात्पूर्वदिने सामग्रीं संपाद्य आचार्यो यजमानश्च एकभक्तं कृत्वाऽपरदिने कृतोपवासो भूमौ स्वपेत् ॥ अपरेद्युः दीपदानदिने ब्राह्मे मुहूर्ते चोत्थाय गुरुं गणपतिं स्मृत्वा आवश्यकं निर्वर्त्य दंतान्संशोध्याचम्य स्नात्वा प्राणानायम्य नित्यसंध्यां च कृत्वा कर्म समाप्य पूर्वोक्तसंभारान्संभृत्य कंबलाद्यासनेषूपविश्य आदौ गणपतिपूजनं कृत्वा अर्घसंपुटं कृत्वा अद्येत्यादि संस्मृत्य श्रीबटुकभैरवप्रीत्यर्थं दीपदानं कर्तुं ममेप्सितफलावाप्त्यै आचार्यं त्वामहं वृणे इति वृत्वा वस्त्राभूषणानि निवेद्य दक्षिणां दत्त्वा "भक्त्या समागतोऽहं ते पादयोर्भक्तवत्सल ॥ दीपकार्यं च भवता संपाद्यं वै नमोनमः॥" इति मन्त्रेण दंडवन्नमस्कृत्य अन्यांस्त्रीन्पंच सप्त नवैकादश वा ब्राह्मणान्वृणुयात् ॥ तैर्ब्राह्मणैः सह पुण्याहवाचनादीनि नांदीश्राद्धांतानि कृत्वा पश्चात्तैर्ब्राह्मणैः सहाचार्यो भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठांतं मातृकाबहिर्मातृकान्यासान्मूलमंत्रस्य ऋष्यादिन्यासकरषडंगन्यासाङ्गन्यासपदन्यासाक्षरन्यासैकादशन्यासपीठ न्यासादीन्पद्धत्युक्तमार्गेण कृत्वा सपादहस्तां समंततश्चतुरस्रां चतुरंगुलोच्चां दीपवेदीं शोधितस्थले निर्माय कपिलगोमयेनोपलिप्य तत्र रक्तचन्दनेन बिंदुत्रिकोणषट्कोणवृत्ताष्टदलचतुर्द्वारसंयुतं यंत्रं विलिख्य ततो दीप वेदिकाग्रे कलशं संस्थाप्य तंदुलेनाष्टदलं कृत्वा तदुपरि कलशं संस्थाप्य भूरसीति भूमिं प्रार्थ्य आजिघ्रेति कलशं महीद्यौरिति जलं याः फलिनीति फलं हिरण्यगर्भेति सुवर्णमुद्राम् अश्वत्थेति पंचपल्लवान् सुजातो ज्योति षेति वस्त्रयुगं पूर्णादर्वीति पूर्णपात्रं तदुपरि पूजायंत्रं मध्ये सुवर्णरचितां मूर्तिं संस्थाप्य अग्न्युत्तारणं लोहो

त्तारण कृत्वा तदग्रे पात्रस्थापनं पद्धतिप्रोक्तविधिना कृत्वा अंतर्यागं कृत्वा तन्मयो भूत्वा बहिर्यागम् आवरण पूजां कृत्वाबलिदानादिनीराजनांतं कृत्वा होमं संपाद्य पुष्पाञ्जलिं दत्त्वा देवाज्ञां गृहीत्वा दीपदानं कुर्यात् ॥ तद्यथा ॥ आसने उपविश्य वामे गुरुभ्यो नमः दक्षिणे गणपतये नमः हृदि बं बटुकाय नम इति नमस्कृत्य अद्येत्यादिप्रयोगमुच्चार्य मम यजमानस्य वा सकलमनोरथसिद्ध्यये प्रयोगानुसारेण चत्वारिंशद्दिनं वाष्टाविंशति दिनं वा एकाविंशद्दिनं वा पञ्चदशदिनं वा सप्तदिनपर्यंतममुकसंख्याकमितेन पात्रेण घृतेन तैलेन वा अमुकसं ख्याभिर्वर्तिभिर्दीपदानमहं करिष्ये इति संकल्पः ॥ ॐ अस्य श्रीबटुकभैरवदीपदानमालामन्त्रस्य मन्मथ ऋषिः । पंक्तिच्छंदः । आपदुद्धारकबटुकभैरवो देवता । बं बीजम् । ह्रीं शक्तिः । मम सर्वमनोरथसिद्ध्यये दीपदाने विनि योगः ॥ अथ मालामंत्रन्यासः ॥ मन्मथऋषये नमः शिरसि । पंक्तिच्छंदसे नमः मुखे । भैरवदेवतायै नमः हृदये । बं बीजाय नमः गुह्ये । ह्रीं शक्तये नमः पादयोः । विनियोगाय नमः सर्वांगे । अथ बीजशक्तिन्यासः ॥ ह्रां बां अंगुष्ठाभ्यां नमः हृदयाय० । ह्रीं बीं तर्जनीभ्यां नमः शिरसे० । ह्रूं बूं मध्यमाभ्यां नमः शिखायै ॥ ह्रैं बैं अनामिकाभ्यां नमः कवचाय० । ह्रौं बौं कनिष्ठिकाभ्यां नमः नेत्रयोः । ह्रः बः करतलकरपृष्ठाभ्यां नमः अस्त्राय फट् ॥ इति करषडंगबीजशक्तिन्यासाः ॥ प्रयोगानुसारेण सात्विकं राजसं तामसं ध्यानं कृत्वा ततः पूर्वोक्तदीप वेद्युपरि लिखितं यंत्रं तदक्षतैः पूरयित्वा तस्या वेद्याः अष्टदिक्षु खदिरवृक्षोद्भवानष्टकीलान्निखाय पूजनं कुर्यात् ॥ तद्यथा ॥ तेषु कीलेषु पूर्वादिदिक्क्रमेण माषान्नचणकादिदीपयुतं साधारं बलिं संस्थाप्य रक्तचन्दन लोलितैः करवीरकुसुमाक्षतैः अस्त्राय फट् इति बलिं निधाय गंधादिभिर्जयंतं संपूज्य पूर्वे " ॐ ह्रीं जयन्त भैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं जयंतभैरवाय नमः ॥ " इति बलिं दत्त्वा १ ॥ आग्नेये पूर्ववत् अघोरं संपूज्य " ॐ ह्रीं अघोरभैरव एहि २ इम सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं अघोरभैरवाय नमः " इति बलिं दत्त्वा २ दक्षिणे पूर्ववत् चामीकरं संपूज्य " ॐ ह्रीं चामीकरभैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं चामीकरभैरवाय नमः" इति बलिं दत्त्वा ३ ॥ नैर्ऋत्ये पूर्ववदसितांगं संपूज्य "ॐ ह्रीं असितांग भैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं असितांगभैरवाय नमः इति बलिं दत्त्वा ४ ॥ पश्चिमे पूर्ववद्भीषणं संपूज्य "भीषणभैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं भीषणभैरवाय नमः" इति बलिं दत्त्वा ५ ॥ वायव्ये पूर्ववत्प्रचंडं संपूज्य "ॐ ह्रीं प्रचंडभैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं प्रचंडभैरवाय नमः " इति बलिं दत्त्वा ६ ॥ उत्तरे पूर्ववत्करालभैरवं सपूज्य "ॐ ह्रीं करालभैरव एहि २ इमं

सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं करालभैरवाय नमः" इति बलिं दत्त्वा ७॥ ईशान्ये पूर्ववत्कपालभैरवं संपूज्य "ॐ ह्रीं कपालभैरव एहि २ इमं सदीपं माषान्नबलिं गृह्ण २ मां रक्ष २ अभीष्टं कुरु २ स्वाहा ॐ ह्रीं कपालभैरवाय नमः" इति बलिं दत्त्वा ८ ॥ इत्यष्टदिक्षु बलिदानेन संपूज्य गुरुभ्यो नमः परमगुरुभ्यो नमः परात्परगुरुभ्यो नमः परमेष्ठिगुरुभ्यो नमः ग्लौं गणपतये नमः। क्षौं स्थान क्षेत्रपालाय नम इति नत्वा रक्तचंदनेन ताम्रपात्रोपरि दीपयंत्रं लिखेत् ॥ त्रिकोणं षट्कोणं चतुरस्रं ताम्रपात्रोत्कीर्णं वा तत्र संस्थाप्य रक्तचंदनाक्तैस्तंदुलैः पूरयित्वा तत्र पीठशक्तिं पूजयेत् ॥ ॐ मंडूकाय नमः ॐ कालाग्निरुद्राय नमः ॐ मूलप्रकृत्यै नमः ॐ आधारशक्त्यै नमः ॐ कूर्माय नमः ॐ अनंताय नमः ॐ पृथिव्यै नमः ॐ सुधांबुधये नमः ॐ मणिद्वीपाय नमः ॐ चिंतामणिगृहाय नमः ॐ श्मशानाय नमः ॐ पारिजाताय नमः ॐ रत्नवेदिकायै नमः ॐ मणिद्वीपाय नमः ॐ धर्माय नमः ॐ ज्ञानाय नमः ॐ वैराग्याय नमः ॐ ऐश्वर्याय नमः ॐ अधर्माय नमः ॐ अज्ञानाय नमः ॐ अवैराग्याय नमः ॐ अनैश्वर्याय नमः ॐ आनंदकंदाय नमः ॐ संविन्नालाय नमः ॐ सर्वतत्त्वात्मकपद्माय नमः ॐ प्रकृतिमयपत्रेभ्यो नमः ॐ विकारमयकेसरेभ्यो नमः ॐ पंचाशद्वर्णबीजाढ्यकर्णिकायै नमः ॐ अं द्वादशकलात्मने सूर्यमंडलाय नमः ॐ ऊं षोडशकलात्मने चंद्रमंडलाय नमः ॐ मं दशकलात्मने वह्निमंडलाय नमः ॐ सं सत्त्वाय नमः ॐ रं रजसे नमः ॐ तं तमसे नमः ॐ आं आत्मने नमः ॐ अं अंतरात्मने नमः ॐ पं परमात्मने नमः ॐ ह्रीं ज्ञानात्मने नमः ॐ परतत्त्वांतपीठदेवताभ्यो नमः ॐ वामायै नमः ॐ ज्येष्ठायै नमः ॐ रौद्र्यै नमः ॐ काल्यै नमः ॐ कलविकरण्यै नमः ॥ ॐ बलविकरण्यै नमः ॥ ॐ बलप्रमथिन्यै नमः ॐ सर्वभूतदमन्यै नमः ॐ मनोन्मन्यै नमः ॐ नमोभगवते सकलगुणात्मशक्तियुक्ताय अनंताय योगपीठात्मने नम इति पीठं संपूज्य ततः षट्कोणे ह्रां बां हृदयाय नमः हृदयं पूजयामि। ह्रीं बीं शि० पू०। ह्रूं बूं शिखां पू०। ह्रैं बैं क० पू०। ह्रौं बौं ने० पू०। ह्रः बः अ० पूजयामि इति संपूज्य तत्र यथाकामनया कृतं स्वर्णादिदीपपात्रं संस्थाप्य गायत्रीमंत्रेण गोघृतं तिलादितैलं वा संपूर्य तत्र गायत्रीमंत्रेण यथाकामनासंख्यवर्तीं निधाय । तंतुसंख्या यावं तास्तावद्भिर्मंत्रावृत्तिभिरभिमंत्र्य मूलमंत्रेण दीपानुरूपां शलाकां निधाय दक्षिणधरां छुरिकां निखाय ॐ ह्रीं छीं छुरिके मम शत्रुच्छेदिनि रिपून्निर्दलय २ मां पाहि २ स्वाहा इति छुरिकां संपूज्य ॐ ह्रां ह्रीं सर्वांगसुंदर्यै शलाकायै नमः इति शलाकां संपूज्य पूर्वसंस्थां वा उत्तरसंस्थां वा पश्चिमसंस्थां वा शुभकार्ये अशुभे दक्षिणसंस्थां वर्त्तिं निधाय अद्येत्यादि अमुककामनासिद्ध्ये दीपदानं करिष्ये इति संकल्प्य मूलेन गायत्रीमंत्रेण वा दीपं प्रज्वालयेत् ॥ ततः पूर्ववदृष्यादिषडंगन्यासं कृत्वा दीपं संकल्पयेत् ॥ तत्र मंत्रः ॥ "ॐ ह्रीं ऐं श्रीं क्लीं ऐं

ह्रीं श्रीं सर्वज्ञाय प्रचंडपराक्रमाय बटुकाय इमं दीपं गृहाण सर्वकार्याणि साधय २ दुष्टान्नाशय २
त्रासय २ सर्वतो मम रक्षां कुरु २ हुं फट् स्वाहा " इति मंत्रेणाक्षतचंदनपुष्पसहितं जलं दीपाग्रे
निक्षिपेत् ॥ पुनर्दक्षहस्ते जलमादाय-"गृहाण दीपं देवेश बटुकेश महाप्रभो ॥ ममाभीष्टं कुरु क्षिप्रमापद्भ्यो
मां समुद्धर ॥ " मूलमुच्चार्य बटुकाय इमं दीपं निवेदयामि नमः इति जलं भूमौ निक्षिपेत् ॥ ततो दीपस्य
प्राणप्रतिष्ठां कुर्यात् ॥ " ॐ आं ह्रीं क्रों यं रं लं वं शं हौं अं क्षं सं हं सः ह्रीं अं इं सः अस्य
दीपस्य प्राणाः इह प्राणाः ॐ आं २४ जीव इह स्थितः ॥ ॐ आं २४ सर्वेंद्रियाणि स्थितानि ॐ आं
२४ वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा " इति प्राणप्रतिष्ठां कृत्वा दीपे
बटुकमावाह्य यथाकामनया ध्यात्वा आवाहनादिमुद्राः प्रदर्श्य मूलेन गंधाक्षतपुष्पधूपदीपनैवेद्यादिपञ्चोपचारैः
संपूज्य दीपकलशोपरि आवरणपूजां कुर्यात् ॥ यथा-ॐ असितांगभैरवाय नमः आसतांगभैरव पू०त० ॥
एवं सर्वत्र ॥ ॐ रुरुभैरवाय० ॐ चंडभैरवाय० ॐ क्रोधभैरवाय० ॐ उन्मत्तभैरवाय० ॐ कपालभैरवाय०
ॐ भीषणभैरवाय० ॐ संहारभैरवाय० ॥"अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं प्रथमा
वरणार्चनम् ॥१॥ ह्रां बां हृदयाय नमः हृदयं पूजयामि ह्रीं बीं शिर० ह्रूं बूं शिखा० ॐ हैं बैं क० ह्रौं बौं नेत्रे०
ह्रः बः अस्त्रा० अभीष्ट० द्वितीयावरणार्चनम् ॥ २ ॥ ॐ डाकिनीपुत्रकेभ्यो० ॐ राकिनीपुत्रकेभ्यो०ॐ लाकिनी
पुत्रकेभ्यो०ॐ काकिनीपुत्रकेभ्यो० ॐ शाकिनीपुत्रकेभ्यो० ॐ हाकिनीपुत्रकेभ्यो० ॐ मालिनीपुत्रकेभ्यो०
ॐ देवीपुत्रकेभ्यो० ॐ उमापुत्रकेभ्यो० ॐ रुद्रपुत्रकेभ्यो० ॐ मातृपुत्रकेभ्यो० ॐ ऊर्ध्वमुखीपुत्रकेभ्यो०
ॐअधोमुखीपुत्रकेभ्यो० अभीष्टसि० तृतीयावरणार्चनम् ॥ ३ ॥ पूर्वे ॐ ब्राह्मीपुत्रकाय० ईशाने ॐ माहेश्वरीपुत्र
काय उत्तरे ॐ वैष्णवीपुत्रकाय० वायव्ये ॐ कौमारीपुत्रकाय० पश्चिमे ॐ इंद्राणीपुत्रकाय० नैर्ऋत्ये ॐ महा
लक्ष्मीपुत्रकाय० दक्षिणे ॐ वाराहीपुत्रकाय० आग्नेये ॐ चामुंडापुत्रकाय० अभीष्ट० चतुर्थावरणार्चनम् ॥ ४ ॥
दशदिक्षु प्रदक्षिणक्रमेण ॐ हेतुकाय० ॐ त्रिपुरांतकाय० ॐ वेतालाय० ॐ अग्निजिह्वाय० ॐ कालांतकाय०
ॐ करालाय० ॐ एकपादाय० ॐ भीमरूपाय० ॐ अचलेश्वराय० ॐ हाटकेश्वराय० अभीष्ट० पंचमाव
रणार्चनम् ॥५॥ ॐ श्रीकंठेशाय० अनंतेशाय० सूक्ष्मेशाय० त्रिमूर्त्तीशाय० अमरेशाय० अर्घीशाय० भारभूती ॥ ७९ ॥
शाय० अतिथीशाय० स्थाण्वीशाय० हरेशाय० झिंटीशाय० भौक्तिकेशाय० सद्योजातेशाय० अनुग्रहेशाय०
अक्रूरेशाय० महासेनेशाय० क्रोधीशाय० चंडेशाय० पंचांतकेशाय० शिवोत्तमेशाय० एकरुद्रेशाय० कूर्मेशाय०
एकनेत्रेशाय० चतुराननेशाय० अजेशाय० शर्वेशाय० सोमेशाय० लांगलीशाय० दारुकेशाय० अर्धनारीश्व
राय० उमाकांतेशाय० आषाढीशाय० दंडीशाय० अत्रीशाय० मीनेशाय० लोहितेशाय० बकेशाय०

छागलेशाय॰ द्विरंडेशाय॰ महाकालेशाय॰ वालीशाय॰ भुजंगेशाय॰ पिनाकीशाय॰ खड्गीशाय॰ शिखीशाय॰ श्वेतेशाय॰ भृग्वीशाय॰ देवदक्षिणे—लकुलीशाय॰ शिवेशाय॰ संवर्त्तकेशाय॰ अभीष्ट॰ षष्ठावरणार्चनम्॥६॥ भूपुरस्येशाने—योगिनीसहितद्युस्थयोगीश्वरेभ्यो नमः योगिनीसहितेभ्योंऽतरिक्षयोगीश्वरेभ्यो॰ योगिनीसहितेभ्यो॰ भूमिस्थयोगीश्वरेभ्यो॰ सुशक्तिकेभ्यो॰ योगिनीसहितेभ्यो॰ सर्वयोगिभ्यो॰ अभीष्ट॰सप्तमावरणार्चनम्॥७॥पुनर्मूलेन गंधपुष्पधूपदीपनैवेद्यादिभिर्बटुकं संपूज्य बलिं दद्यात् ॥ दीपस्य वामभागे त्रिकोणवृत्तषट्कोणमंडलं कृत्वा बलिमंडलाय नमः इति गंधाक्षतैः संपूज्य तत्राधारं संस्थाप्य तत्र क्षत्रियादिभिः समांसो बलिर्देय ॥ शाल्योदन शर्करालाजाचूर्णगुडापूपशष्कुलीसमूहसूपपायसान्नादिघृतप्लुतमनेकजातीयं बलिद्रव्यं त्रिमधुयुतं घृतमधुशर्करामोदकमाषवटकानि विविधभक्षद्रव्याणि वा यथा संभवं माषमुद्गान्नप्रधानबलिद्रव्यं संस्थाप्य बलिद्रव्योपरि घृतं रक्तपुष्पं पिष्टदीपं च संस्थाप्य आचम्य मूलेन प्राणानायम्य देशकालो संकीर्त्य अमुकफलावाप्तये श्रीबटुकभैरवप्रीतये अमुकद्रव्येण बलिदानमहं करिष्ये इति संकल्प्य बं बटुकबलिद्रव्याय नम इति मंत्रेण गंधाक्षत पुष्पैबलिद्रव्यं संपूज्य वामकरांगुष्ठेनवष्टभ्य दक्षहस्ते जलमादाय मूलमुच्चार्य "ॐ एहि २ विदुषि पुरं भंजय २ नर्तय २ विग्रह २ महाभैरव बटुक बलिं गृह्ण २ स्वाहा"ॐएह्येहि देवीपुत्र बटुकनाथ कपिलजटाभार भासुरत्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय २ सर्वोपचारसहितं बलिं गृह्ण २ स्वाहा " इति मंत्राभ्यां जलमुत्सृजेत् ॥ समांसबलिपक्षे "ॐ पशुपाशाय विद्महे शिरश्छेदाय धीमहि ॥ तन्नः पशुः प्रचोदयात् ॥ " ॐ अलिपिशितमांसान्न बलिं गृह्ण २ मां रक्ष २ दुं दुर्गायै नमः अलिपिशितमांसान्नबलिं गृह्ण २ शत्रुपक्षस्य रुधिरं पिशितं दिने दिने भक्षय २ गणैः सार्द्धं सारमेयसमन्वितः सर्वगणेभ्यो नमः आमिषं गृह्ण २ भक्षय २ मां रक्ष २ स्वाहा"इति मंत्राभ्यां जलमुत्सृजेत् ॥ ततः स्वहस्ते जलमादायेमं बलिं भुंजानं वरदं प्रभुं ध्यायेत् । ततो दीपपात्राभिमुखं यंत्रमुद्धृत्य प्रथमं कलशस्थापनादिपूजनं न कृतं चेदत्रावसरे पद्धतिरीत्या विधिवत्पूजयेत् ॥ ततोऽष्टोत्तरसहस्रमष्टोत्तरशतं वा यथाशक्ति मूलं प्रजप्य अष्टोत्तरशतनामस्तोत्रं च एकविंशतिवारं एकादशवारं वा शतवारं महाप्रयोगश्चेत्सहस्र वारं वा ब्राह्मणैः सहावृत्य मंत्रं प्रजप्य गुह्यातिगुह्येति मंत्रेण जपं समर्प्य ततः स्तोत्रकवचसहस्रनामादि दीप समाप्तिपर्यंतं प्रत्यहं पाठादि कार्यम् । यावद्दीपं तावदशुभं न वदेत् क्रोधपरनिंदापैशुन्यपरद्रोहपरस्त्रीषु पराङ्मुखो भवेत् ॥ ततो बटुकान्कुमारिकां सुवासिनींश्च पायसान्नैर्वटकैर्मोदकैश्चणकैश्च नानाभक्ष्यभोज्यैश्च तर्पयेत् ॥ तत आचार्यः स्वयं वा शांतिस्तोत्रं पठेत् ॥ तद्यथा—यस्यार्चनेन विधिना किमपीह लोके कर्मप्रसिद्धमिति नामफलं प्रसूते ॥ तं संततं सकलसाधकवांछितार्प्ति चिंतामणि सुरगणाधिपतिं नमामि ॥१॥ रक्ताम्बरं ज्वलनपिंगजटाकलापं ज्वालावलीकुटिलचंद्रधरं त्रिनेत्रम् ॥ बालार्कधूमफलकांचनतुल्यवर्णं देवीसुतं बटुकनाथमहं नमामि ॥२॥ हरतु कुल

गणेशो विघ्नसंघानशेषांन्नयतु कुलसपर्यापूर्णतां साधकानाम् ॥ पिबतु बटुकनाथः शोणितं निंदकानां दिशतु सकल कामान् साधकानां गणेशः ॥ ३ ॥ सततविततजश्चक्रभासाविनम्रग्रसमसमुदितो वै श्वाससंदोहनाभिः ॥ प्रलय नयननाभिः किंतु चात्मोद्भवाभिर्भवतु भुवनगर्भो भैरवो नः पुनातु ॥४॥ या काचिद्योगिनी रौद्रा सौम्या घोरतरा पर ॥ गृह्यतां बलिपूजां सा मम व्याधिं व्यपोहतु ॥५॥ नंदंतु साधकाः सर्वे विनश्यंतु प्रदूषकाः॥अवस्था शांभवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ ६ ॥ इति पठित्वा पश्चाज्जपदशांशेन होमादिब्राह्मणभोजनांतैः संतर्प्य ब्राह्मणा ञ्जपानुसारेण दक्षिणाभिः संतोष्य आचार्यं कार्यानुसारेण दक्षिणावस्त्रालंकारादिभिः संतोष्य प्रणमेत् ॥ अथ वीरसाधनप्रयोगः ॥ तत्र साधकेंद्रः कृतनित्यक्रियः पालाशपत्रकृतषोडशपुटेषु जलेन प्रफुल्लितान् सुपक्वानपक्वा न्वा माषान् मुद्गान्मसूराञ्चणकान् ओदनं क्षीरम् अपूपान् सुहालीन् प्रत्येकमेकैकः पदार्थो द्वे द्वे पात्रे एवं षोडश पात्रे संपूर्य अन्यपात्रे किंचिदधिकं च पूर्वोक्तं सर्वं कन्यया कर्तितं कर्पाससूत्रं कुंकुमेन रंजितान् क्षी वृक्षभवान ष्टौ कीलान् स्तंभार्थमेकं कीलं तेभ्यः स्थूलम् एवं नव कीलान् गंधाक्षतपुष्पधूपदीपान् अष्टौ तांबूलान् फलानि च गृहीत्वा उत्तरसाधकसहितः श्मशाननिकटे गत्वा पादौ प्रक्षाल्य आचम्य स्वेष्टदेवतां स्मृत्वा कृतांजलि रिदं वाक्यं वदेत् ॥"अत्र श्मशाने याः काश्चिद्देवता निवसंति हि ॥ ताः प्रयच्छंतु मे सिद्धिं प्रसन्नाः संतु पांतु माम् ॥ १ ॥" इति संप्रार्थ्य आत्मरक्षां कुर्यात् ॥ तद्यथा ॥ पूर्वे मां शंकरः पातु तथाग्नेय्यां च शूलधृक् ॥ कपाली दक्षिणे पातु नैर्ऋत्ये जटिलोऽवतु ॥ १ ॥ पश्चिमे पार्वतीनाथो वायव्ये प्रमथाधिपः ॥ उत्तरे मुंडमालोऽव्या दीशान्ये वृषभध्वजः ॥ २ ॥ ऊर्ध्वं पातु तथा शंभुरधस्ताद्धूलिधूसरः ॥ अग्रतो भैरवः पातु पृष्ठतः पातु खेचरः ॥ ३ ॥ दक्षिणे भूचरः पातु वामे च पिशिताशनः ॥ केशान्पातु विशालाक्षो मूर्धानं च मरुत्प्रियः ॥ ४ ॥ मस्तकं पातु भृग्वीशो नेत्रे पातु महामनाः ॥ कपोलौ पातु वीरेशो गंडौ गंडाभिमर्दनः ॥ ५ ॥ उत्तरोष्ठे विरू पाक्षो ह्यधरे योगिनीप्रियः ॥ अक्षेषु दक्षविध्वंसी चिबुके तु कपालधृक् ॥ ६ ॥ कंठे रक्षतु मां देवो नीलकंठो जगद्गुरुः ॥ दक्षस्कंधे गिरींद्रेशो वामस्कंधे वसुंजयः ॥ ७ ॥ दक्षिणे च भुजे सर्वमन्त्रनाथः सदावतु ॥ वामे भुजे सार्वभौमो हृदये पातु पांडुरः ॥ ८ ॥ दक्षस्तने पशुपतिर्वामे पातु महेश्वरः ॥ उदरे सर्वकल्याणकारकोऽवतु मां सदा ॥ ९ ॥ नाभौ कामप्रविध्वंसी जंघे पातु दयामयः ॥ जानुनी पातु जामित्रो गुल्फौ गौरीपतिः सदा ॥१०॥ पादपृष्ठे सामनिधिस्तथा पादांगुलीर्हरः ॥ पादाधः पातु सततं व्योमकेशो जगत्प्रियः ॥ ११ ॥ इति रक्षामन्त्रा न्पठित्वा पूर्वादिदिक्षु रक्षाबीजमन्त्रान्पठन्नमस्कुर्यात् ॥ "ॐ ह्रां ह्रीं हूं ह्रः नमः पूर्वे ॥ ॐ ह्रीं हूँ ह्रौं नमः आग्नेये ॥ ॐ ह्रीं श्रीं नमः दक्षिणे ॥ ॐ ग्लूं ब्लूं नग नग नमः नैर्ऋत्ये ॥ ॐ च्यूं मूं प्रूं सं सः नमः पश्चिमे ॥ ॐ भ्रां भ्रां नमः वायव्ये ॥ ॐ श्रां श्रां भैरवे नमः उत्तरे ॥ ॐ ब्रूं ब्रूं म्रूं फट् नमः ईशान्ये ॥ ग्लौं ब्लूं नमः ऊर्ध्वे

ॐ भ्रां भ्रं भ्रः नमः अधोदेशे" ॥ एवं बीजमन्त्रेण रक्षां कृत्वा ॥ ततः पूर्वाद्यष्टदिक्षु कीलाष्टकं मध्यश्मशाने च स्तंभार्थं कीलकं च निखाय पूजासाहित्यं मध्यस्तंभसमीपे संस्थाप्य पूर्वाभिमुखो भैरवं प्रार्थयेत् ॥ "ॐ भां भैरवभैरवाय नमः भां भैरव भैरव भयंकर हर मां रक्ष रक्ष हुं फट् स्वाहा" इति प्रार्थयित्वा ॥ ततः सिद्धमाष भरितपालाशपुटकं गन्धपुष्पधूपदीपादिपूजासामग्रीं गृहीत्वा पायसोदकपात्रहस्तो निर्भयः पूर्वकीलसमीपं गत्वा ॥ तत्र ॐ लं इंद्रं सांग सपरिवार इहागच्छेत्यावाह्य ॥ ऐरावतारूढं वज्रहस्तं पीतवर्णं सहस्राक्षं सुर गणपरिवारं ध्यात्वा ॥ ॐ लं इंद्राय नमः आसनार्घपाद्याचमनस्नानगन्धपुष्पाक्षतधूपदीपोपचारैः संपूज्य तत्पु रतश्चतुरस्रं मंडलं जलेन कृत्वा तत्र माषपुटकं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ ह्रां ह्रीं हूं भो इंद्र सुरनायक शीघ्रं मे प्रसन्नो भव सनातनीं सिद्धिं मे देहि रक्ष मां इमं माषबलिं गृह्ण २ हुं फट्" इतिमन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृजेत् तांबूलं च दत्त्वा प्रणमेत् ॥ तत आग्नेयकोणगतकीलसमीपं गत्वा तत्र ॐ रं अग्ने सांग सपरिवार इहागच्छागच्छेत्यावाह्य ॥ मेषमारूढं शक्तिहस्तं त्रिनेत्रं तेजोनिधिं ध्यात्वा ॥ ॐ रं अग्नये नमः आसनार्घपाद्याचमनस्नानगन्धपुष्पाक्षतधूपदीपोपचारैः संपूज्य तत्पुरतश्चतुरस्रं मंडलं जलेन कृत्वा तत्र मुद्गभरितं पुटकं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ ह्रीं हूं ह्लौं अग्ने तेजो नायक शीघ्रं मे प्रसन्नो भव सनातनीं सिद्धिं मे देहि इमं मुद्गबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणम्य ॥ ततः दक्षिणकीलसमीपं गत्वा तत्र ॐ टं यम सांग सपरिवार इहा गच्छागच्छेत्यावाह्य ॥ महिषारूढं कृष्णवर्णं दंडहस्तं प्रेतगणपरिवेष्टितं ध्यात्वा ॥ ॐ टं यमाय नमः आसना द्युपचारैः पूर्वोक्तैः सम्पूज्य तत्पुरतश्चतुरस्रं मडलं जलेन कृत्वा तत्र मसूरभरितं पुटकं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ भ्रां श्रीं भ्रूं भो यम प्रेताधिपते शीघ्रं मे प्रसन्नो भव इमं मसूरबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणम्य ॥ ततः नैर्ऋत्यकोणगतकीलसमीपं गत्वा तत्र ॐ क्षं निर्ऋते सांग सपरिवार इहागच्छागच्छेत्यावाह्य ॥ प्रेतारूढं धूम्रवर्णं खड्गहस्तं रक्षोभिः परिवृतं ध्यात्वा ॥ ॐ क्षं निर्ऋतये नमः आसनाद्युपचारैः पूर्वोक्तैः सम्पूज्य तत्पुरतश्चतुरस्रं मण्डलं जलेन कृत्वा तत्र चणकपूरितं पुटकं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ फ्रें फ्रें फ्रें हूं हूं खें खें खें ह्रौं ह्रौं भो भो रक्षोनाथ शीघ्रं मे प्रसन्नो भव इमं चणकबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणमेत् ॥ ततः पश्चिमदिग्गतकीलसमीपं गत्वा तत्र ॐ वं वरुण सांग सपरिवार इहागच्छागच्छे त्यावाह्य ॥ मकरारूढं पाशहस्तं श्वेतवर्णं यादोगणपरिवारसहितं ध्यात्वा ॥ ॐ वं वरुणाय जलनाथाय नमः आसनार्घपाद्याद्युपचारैः पूर्वोक्तैः सम्पूज्य तत्पुरतश्चतुरस्रं मण्डलं जलेन कृत्वा तत्रौदनपूरितपात्रं निधाय दक्ष

हस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ व्रां व्रीं व्रूं भो भो वरुण जलनाथ शीघ्रं मे प्रसन्नो भव सिद्धिं मे देहि इमम् ओदनबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणम्य ॥ ततो वायुकोणगतकीलसमीपं गत्वा तत्र ॐ यं वायो सांग सपरिवार इहागच्छागच्छेत्यावाह्य मृगारूढं वृक्षायुधधरं स्वमरुद्गणसहितं ध्यात्वा ॥ ॐ यं वायवे नमः आसनाद्युपचारैः पूर्वोक्तैः सम्पूज्य तत्पुरतश्चतुरस्रं मण्डलं जलेन कृत्वा तत्र पायसपूरितं पात्रं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ वां वीं वूं ॐ ब्रां ब्रीं ब्रूं भो भो वायो भुवनपते शीघ्रं मे प्रसन्नो भव सिद्धिं मे देहि इमं पायसबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणमेत् ॥ ततः उत्तरदिग्गतकीलसमीपं गत्वा तत्र ॐ कुं कुबेर सांग सपरिवार इहागच्छागच्छेत्यावाह्य ॥ नरवाहनं गदाहस्तं शुक्लवर्णं यक्षगणपरिवेष्टितं ध्यात्वा ॥ ॐ कुं कुबेराय नमः आसनाद्युपचारैः पूर्वोक्तैः संपूज्य ॥ तत्पुरतश्चतुरस्रं मंडलं जलेन कृत्वा तत्रापूपपूरितं पात्रं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ कूं कूं कूं ॐ क्रां क्रां क्रां भो भो यक्षनाथ शीघ्रं मे प्रसन्नो भव सिद्धिं मे देहि इममपूपबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन्पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणमेत् ॥ ततः ईशानकोणगतकीलसमीपं गत्वा ॐ हं ईशान सांग सपरिवार इहागच्छागच्छेत्यावाह्य वृषभारूढं शूलहस्तं श्वेतवर्णं विद्यागणसेवितम् ईशानं ध्यात्वा ॥ ॐ हं ईशानाय नमः आसनाद्युपचारैः पूर्वोक्तैः सपूज्य तत्पुरश्चतुरस्रं मंडलं जलेन कृत्वा तत्र सुहालिपूरितपात्रं निधाय दक्षहस्ते जलं गृहीत्वा वामहस्तेन तत्पात्रं स्पृशन् "ॐ श्रां श्रीं। ॐ श्रां श्रां श्रां भो भो ईशान विद्याधिपते शीघ्रं मे प्रसन्नो भव सिद्धिं मे देहि इमं शष्कुलीबलिं गृह्ण २ हुं फट्" इति मन्त्रेण तस्मिन् पात्रे जलं बलिं चोत्सृज्य तांबूलं च दत्त्वा प्रणमेत् ॥ इत्यष्टदिक्पालबलिं दत्त्वा मध्यस्तम्भसमीपं गत्वा निर्भयः सन् "ॐ ह्रां ह्रीं ह्रूं स्तंभाय नमः" इति मन्त्रेण आसनादिभिरुपचारैः सम्पूज्य मन्त्रमयं कवचं पठेत् ॥ तद्यथा-"ॐ ह्रां ह्रीं ह्रूं ह्रः क्ष्रां क्ष्रीं क्ष्रूं क्ष्रः ख्रां ख्रीं ख्रूं ख्रः घ्रां घ्रीं घ्रूं घ्रः भ्रां भ्रीं भ्रूं भ्रः भ्रं भ्रें भ्रों भ्रौं ह्रों ह्रौं ह्रों ह्रों क्ष्रों क्ष्रों क्ष्रों क्ष्रों श्रों श्रों श्रों श्रों श्रों श्रों श्रों श्रों हुं हुं हुं हुं हुं हुं हुं फट् सर्वतो रक्ष रक्ष रक्ष रक्ष भैरवनाथ नाथ हुं फट्" इति मंत्रेण स्वशरीरे व्यापकरूपेणात्मरक्षां कृत्वा स्तंभसमीपे स्वासने पूजिते पूर्वाभिमुखमुपविश्य स्वपुरतः स्तंभात्पश्चिमे सुसमे भूतलेऽष्टदलं पद्मं कृत्वा तद्बहिः षोडशदलम्, तद्बहिः पुनरष्टदलम्, तद्बहिश्चतुर्द्वारयुक्तं चतुरस्रत्रयं च कृत्वा तन्मध्ये देवमावाह्य आसनादिषोडशोपचारैः संपूज्य अंगानि संपूज्य तत्राष्टदले पूर्वादिक्रमेण ॐ असितांगभैरवाय नमः। ॐ रुरुभैरवाय नमः। ॐ चंडभैरवाय नमः॥ ॐ क्रोधभैरवाय नमः। ॐउन्मत्तभैरवाय नमः। ॐ कपालभैरवाय

नमः । ॐ भीषणभैरवाय नमः । ॐ संहारभैरवाय नमः । इ०आ०ततःषोडशदलेषु श्रीबटुकषोडशमित्राणिपूजयेत् पूर्वादिक्रमेण । तद्यथा–ॐ कुलिशाय नमः १ ॐ सुकुलिशाय नमः २ ॐ जामित्राय नमः ३ ॐरामठाय नमः ४ ॐ अरिभाय नमः ५ ॐ प्रचंडाय नमः ६ ॐ चंडकेशाय नमः ७ ॐ चंडात्मने नमः ८ ॐ चामराय नमः ९ ॐ चरित्राय नमः १० ॐ चमत्काराय नमः ११ ॐ चञ्चलाय नमः १२ ॐ चारुभूषणाय नमः १३ ॐचामीकराय नमः १४ ॐ चारुवाहाय नमः १५ ॐ कितवाय नमः १६ इति संपूज्य तद्बहिरष्टदलेषु पूर्वादि क्रमेण ॐ ब्राह्मै नमः १ ॐ माहेश्वर्य्यै नमः २ ॐ कौमार्यै नमः ३ ॐ वैष्णव्यै नमः ४ ॐ वाराह्यै नमः ५ ॐ इंद्राण्यै नमः ६ ॐ चामुंडायै नमः ७ ॐ महालक्ष्म्यै नमः ८ इति मातृः संपूज्य बहिः चतुरस्रे दिक्पालान् पूजयेत् पूर्वादिक्रमेण । तद्यथा–ॐ इंद्राय नमः ॥ ॐ अग्नये नमः ॥ ॐ यमाय नमः ॥ ॐ निर्ऋतये नमः ॥ ॐ वरुणाय नमः ॥ ॐ वायवे नमः ॥ ॐ कुबेराय नमः ॥ ईशानाय नमः ॥ इति लोकेशान् संपूज्य तन्निकटे अस्त्राणि पूजयेत्पूर्वादिक्रमेण । ॐ वज्राय नमः ॥ ॐ शक्तये नमः ॥ ॐ दंडाय नमः ॐ खड्गाय नमः ॥




ॐ पाशाय नमः ॥ ॐ वृक्षायुधाय नमः ॥ ॐ गदायै नमः ॥ ॐ त्रिशूलाय नमः ॥ इति अस्त्राणि संपूज्य मध्ये श्रीबटुकभैरवं संपूज्य आवाहितदेवताभ्यो गंधाक्षतपुष्पधूपदीपान् पृथक्पृथक् पात्रेषु च पायसनैवेद्यं च समर्प्य अक्षतानादाय स्थापितयंत्रदेवतामंडले विकिरन् वीरशांतिं पठेत् ॥ ॐ चंड आयाहि ॥ ॐ प्रचंड आयाहि ॥ ॐ ऊर्ध्वकेश आयाहि ॥ ॐ भीषण आयाहि ॥ ॐ प्रभीषण आयाहि ॥ ॐ व्योमकेश आयाहि ॥ ॐ व्योमवाहो आयाहि ॥ ॐ व्योमव्यापक आयाहि इत्याहूय पृथग्गंधादिभिरुपचारैः संपूज्य पायसनैवेद्यं च पृथक् पृथक् समर्प्य निर्भयः सन् पश्चिमाभिमुखः प्राणायामऋष्यादिन्यासपूर्वकं पूर्वोक्तान् न्यासान्कृत्वा प्रागवन्मालां संपूज्य मूलमंत्रस्याष्टाक्षरपदो

च्चारणपूर्वकमुच्चैस्तरां जपन् वामहस्तेन पायसपात्रमादाय देवं भोजयन् प्रसन्नचित्तो जपं कुर्यात् ॥ ततस्तृप्तो देवो वरं वरयेति ब्रूयात्तदा दंडवद्भूमौ प्रणम्य निजेप्सितवरं गृहीत्वा स्वयं गत्वा महोत्सवं कुर्यात् ॥ इति वीरसाधनविधिः ॥ अथ श्रीबटुकभैरवपद्धतिप्रारंभः ॥ नमः कर्पूरगौराय कैलासाचलवासिने ॥ गौरीकंठग्रहानंदनिष्पंदायान्धकद्विषे ॥ १ ॥ उत्पत्तिस्थितिसंहारकारको जगदीश्वरः ॥ देवाधिदेवो बटुकभैरवोऽवतु मां सदा ॥ २ ॥ भैरवाराधनविधिं प्रवक्ष्यामि समासतः ॥ साधकानां हितार्थाय मुमुक्षूणां विशेषतः ॥ ३ ॥ षट्कर्मणां च संसिद्धयै वक्ष्ये भैरवपद्धतिम् ॥ तत्र श्रीमान्साधकेन्द्रः प्रातःकालात्पूर्वं दंडद्वयात्मके ब्राह्मे मुहूर्ते चोत्थाय निद्रास्थानाद्बहिर्निर्गत्य हस्तौ पादौ प्रक्षाल्याचम्य रात्रिवस्त्रं परित्यज्यान्यवस्त्रं पगिधाय मंत्रस्नानं कृत्वा देवतागृहं प्रविश्य संमार्जनोपलेपादिकं कृत्वा मङ्गलारार्तिकं कृत्वा निर्माल्यमपसार्य पूर्वदिनावशिष्टपत्रादिनाऽभ्यर्च्य देवाय दंतधावनाचमने दत्त्वा नमस्कृत्य शुद्धासने उपविश्य, गुरुस्मरणम् । तद्यथा–स्वशिरसि सहस्रदलपंकजे कोटीन्दुप्रकाशपीठे श्रीनिजगुरुं ध्यायेत् । आनंदमानंदकरं प्रसन्नं ज्ञानस्वरूपं निजबोधरूपम् ॥ योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥१॥ इति ध्यात्वा मानसोपचारैः संपूज्य । प्रातःप्रभृति सायांतं सायादि प्रातरन्ततः ॥ यत्करोमि जगन्नाथ तदस्तु तव पूजनम् ॥ इत्यनेन मंत्रेण सर्वं गुरवे निवेद्य तदाज्ञां गृहीत्वा तत्पादगलितामृतधारया क्षालितं निर्मलमात्मानं विचिंत्य श्रीबटुकमूलमंत्रेण प्राणायामत्रयं कृत्वा स्वहृत्कमले देवं ध्यात्वा मानसोपचारैः संपूज्य संस्मरेत् ॥ श्रीबटुकप्रातःस्मरणम् ॥ प्रातःस्मरामि बटुकं सुकुमारमूर्तिं श्रीस्फाटिकाभसदृशं कुटिलालकाढ्यम् ॥ चक्रं दधानमणिमादिगुणैर्हि युक्तं हस्तद्वयं मणिमयैः पदभूषणैश्च ॥ १ ॥ प्रातर्नमामि बटुकं तरुणं त्रिनेत्रं कामास्पदं वरकपालत्रिशूलदंडान् ॥ भक्तार्तिनाशकरणे दधतं करेषु तं कौस्तुभाभरणभूषितदिव्यदेहम् ॥ २ ॥ प्रातःकाले सदाहं भगणपतिधरं भालदेशे महेशं नागं पाशं कपालं डमरुमथ सृणिं खड्गघंटाभयानि ॥ दिग्वस्त्रं पिंगकेशं त्रिनयनसहितं मुंडमालं करेषु यो धत्ते भीमदंष्ट्रं मम विजयकरं भैरवं तं नमामि ॥ ३ ॥ देवदेव कृपासिंधो सर्वनाशिन्महाऽव्यय ॥ संसारासक्तचित्तं मां मोक्षमार्गे निवेशय ॥४॥ एतच्छ्लोकचतुष्कं वै भैरवस्य तु यः पठेत् ॥ सर्वबाधाविनिर्मुक्तो जायते निर्भयः पुमान् ॥ ५ ॥ एवं ध्यात्वा गुरुमंत्रदेवतात्मनामैक्यं विभाव्य, अजपाजपसंकल्पः संक्षेपतः । आधारे लिंगनाभौ हृदयसरसिजे तालुमूले ललाटे द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के ॥ वासांते बालमध्ये डफकठसहिते आदियुक्ते स्वराणां हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ १ ॥ षट्शतं तु गणेशस्य षट्सहस्रं प्रजापतेः ॥ षट्सहस्रं गदापाणेः षट्सहस्रं पिनाकिनः ॥ २ ॥ आत्मनस्तत्सहस्रं च सहस्रं परमात्मनः ॥ सहस्रं श्रीगुरुभ्यश्च एतानि विनियोजयेत् ॥ ३ ॥ हंसो गणेशो विधिरेव हंसो हंसो हरिर्हंसमयश्च शंभुः ॥ हंसोऽपि जीवो परमात्महंसो हंसो

गुरुर्हंसमयश्च शंभुः ॥ ४ ॥ पूर्वेद्युरहोरात्रोच्चारितं षट्शताधिकमेकविंशतिसहस्रमुच्छ्वासनिश्वासात्मकमजपागायत्री मंत्रजपं श्रीगणेशब्रह्मविष्णुरुद्रजीवात्मपरमात्म श्रीगुरुभ्यो यथासंख्यं समर्पयामीत्युक्त्वा; अद्य सूर्योदयमारभ्य श्वःसूर्योदयपर्यंतमजपागायत्रीजपं करिष्ये। ॐहंसो हंसस्य विद्महे हंसोहसस्य धीमहि ॥ हंसो हंसःप्रचोदयात् इति हंसगायत्रीं जपित्वा, । त्रैलोक्यचैतन्यमयि त्रिशक्ते श्रीविश्वमातर्भवदाज्ञयैव ॥ प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयामि ॥ १ ॥ इति प्रार्थ्य भूमिं प्रार्थयेत् ॥ समुद्रमेखले देवि पर्वतस्तनमंडले ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥ १ ॥ इति भूमिं संप्रार्थ्य श्वासानुसारेण भूमौ पादं दत्त्वा बहिर्व्रजेत् ॥ इति प्रातःकृत्यम् ॥ ग्रामाद्बहिः नैर्ऋत्यकोणे जनवर्जिते उत्तराभिमुखः अनुपानत्कः वस्त्रेण शिरः प्रावृत्य मलमोचनं कृत्वा मृत्तिकया जलेन यथासंख्यं शौचं कुर्यात् । अथ दन्तधावनम्–आम्रचंपकापामार्गाद्यन्यतमं द्वादशांगुलं दन्त काष्ठं गृहीत्वा प्रार्थयेत्–आयुर्बलं यशो वर्चः प्रजापशुधनानि च ॥ श्रियं प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥१॥ इति प्रार्थ्य ॥ "ॐ ह्रीं तडित्स्वाहा" इति मन्त्रेण काष्ठं छित्वा, "ॐ क्लीं कामदेवाय सर्वजनप्रियाय नमः" इत्यनेन दतान् संशोध्य ऐं मन्त्रेण जिह्वामुल्लिख्य दंतकाष्ठं क्षालयित्वा नैर्ऋत्यां शुद्धदेशे निःक्षिपेत् ॥ मूलेन मुख्यं प्रक्षाल्या चामेदिति दंतधावनम् ॥ अथ स्नानम् ॥ दंतधावनानन्तरं स्नानार्थं नद्यादौ गच्छेत्, तत्र मलस्नानमादौ कृत्वा वैदिकस्नानं च कृत्वा पश्चात्तांत्रिकं कुर्यात् ॥ तत्र संकल्पः–अद्येत्यादिना श्रीबटुकभैरवप्रीत्यर्थं मन्त्रस्नान महं करिष्ये । जले त्रिकोणं प्रकल्प्य क्रों इत्यंकुशमुद्रया तीर्थान्यावाह्य । ब्रह्मांडोदरतीर्थानि करैः स्पृष्टानि ते रवे ॥ तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ १ ॥ इति मंत्रेण तीर्थान्यावाह्य धेनुमुद्रया मृतीकृत्य सप्तच्छिद्राणि निरुध्य गुरुं ध्यायन् मूलमुच्चरन् त्रिरुन्मज्य मूलेनांकुशमुद्रया स्वमूर्ध्नि त्रिधाऽभिषिच्य त्रिः बाह्वोः, त्रिः हृदि, पुनराचम्य मूलांते श्रीमन्महाबटुकभैरवस्तृप्यतामिति दशधा संतर्प्य सूर्यमंत्रेण सूर्या यांजलित्रयं दत्त्वा, ततः ॐ ब्रह्माणं तर्पयामि ॥ ॐ विष्णुं तर्पयामि ॥ ॐ रुद्रं तर्पयामि इति त्रिस्तर्पयेत् । पुनः प्राणायामभृष्यादिकं कृत्वा ध्यात्वा संहारमुद्रया देवं स्वहृदये उद्वास्य तीर्थानि सूर्यमंडले उद्वास्य तीर्थं नमस्कृत्य, तीरमागत्य तीरे अंजलित्रय निक्षिपेत् । तद्यथा–असुरा भूतवेतालाः कूष्मांडा ब्रह्मराक्षसाः ॥ ते सर्वे तृप्तिमायांतु मया दत्तेन वारिणा ॥ १ ॥ ततो जलादुत्तीर्य युग्मे धौते वाससी मूलेन संप्रोक्ष्य योनिमुद्रां प्रदर्श्य तत् परिधाय, तीर्थे वा गृहे आगत्य स्वशाखोक्तां प्रातःसंध्यां विधिपूर्वकं कृत्वा तस्या विसर्जनं कृत्वा, तांत्रिकीं संध्या प्रारभेत ॥ तत्रैवं क्रमः– तीर्थे यदि संध्याद्वयं कृतं चेद्गृहे आगत्य द्वारपूजा कृत्वा भूशुद्धयादिकं कुर्यात् । यदि तीर्थे संध्या न कृता चेत्तदा पूजार्थं शुद्धजलं गृहीत्वा स्तोत्रकवचादिकं पठन् पूजागारद्वारसमीपमागत्य द्वारपूजां कृत्वा संध्याद्वयं कुर्यात् ॥ यथावद्भस्मना त्रिपुण्ड्राणि कृत्वा वैदिकीं संध्यां विधाय तांत्रिकीं कुर्यात् ।

अथ तांत्रिकी संध्या—यथा—श्रीबटुभैरवाराधनयोग्यताजननार्थं तांत्रिकसंध्यामहं करिष्ये इति संकल्प्य, ॐ ह्रां आत्मतत्त्वाय स्वाहा, ॐ ह्रीं विद्यातत्त्वाय स्वाहा, ॐ हुं शिवतत्त्वाय स्वाहा इति त्रिराचामेत्। एते मंत्राः स्वधांता इति केचित्। ततः खानि संस्पृश्य मूलेन प्राणानायम्य ऋष्यादिकरांगन्यासौ कृत्वा मूलेन जलं संवीक्ष्य अस्त्राय फट् इति संप्रोक्ष्य अनेनैव दर्भेण संताड्य कवचाय हुम् इत्यभ्युक्ष्य तज्जलेन कुंभमुद्रया मूर्ध्नि सिंचेत्। ततो वामपाणौ दक्षेण तीर्थजलमादाय ॐ ह्रां बां हृदयाय नमः इति मंत्रेण सप्तवारमभिमन्त्र्य, तद्गलितोदकबिंदुभिर्दक्षहस्तेन शिरसि मार्जयेत्। तत्र मंत्राः—ह्रां बां हृदयाय नमो वौषट्। ह्रीं बीं शिरसे स्वाहा वौषट्। हूं बूं शिखायै वौषट्। ह्रैं बैं कवचाय हुं वौषट्। ह्रौं बौं नेत्रत्रयाय वौषट्। ह्रः बः अस्त्राय फट्। ॐ आं ह्रां व्योमव्यापिने नमः॥ ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥ भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः॥ ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः॥ शर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मेऽस्तु सदाशिवोम्॥ ह्रां ह्रीं हूं मूलमंत्रश्च, एतैर्मंत्रैर्मार्जयित्वा वामहस्तस्थजलं वामनासासमीपमानीय इडया देहांतरादाकृष्य पापौघं प्रक्षाल्य कृष्णवर्णं तदुदकं दक्षिणया विरेच्य वामहस्तस्थं दक्षिणेनादाय पुरः कल्पित वज्रशिलायामस्त्रमंत्रेण क्रोधादास्फालयेत्। ततः पूर्ववदाचम्य करांगन्यासौ कृत्वा अर्घपात्रे जलं कृत्वा तदादाय मूलमुच्चार्य शिवरूपाय सूर्यायेदमर्घं स्वाहा इति त्रिरर्घ्यं दत्त्वा मूलेनोपस्थाय गायत्रीं मूलमंत्रं च जपेत्। ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि॥ तन्नो रुद्रः प्रचोदयात्। इति गायत्रीमष्टाविंशतिमष्टोत्तरं मूलं च संजप्य जपं निवेद्य नमस्कुर्यात्॥ इति संध्या॥ संध्येयं सर्वशैवमंत्रेषु पंचाक्षरादिषु ज्ञेया॥ ततः पुनः पूर्ववदाचम्य करांगन्यासौ कृत्वा तीर्थे देवतापीठं विचिंत्य हृदयादेवं तत्रावाह्य जलमयैः पंचोपचारैरभ्यर्च्य अंजलिना मूलमुच्चार्य श्रीभैरवं तर्पयामि, इत्येवमष्टोत्तरशतमष्टाविंशतिं दशवारं वा तर्पयेत्॥ आवरणदेवताभ्यः षडंगदेवताभ्य एकैकमंजलिना नाममंत्रेण प्रणवाद्येन नमोऽन्तेन च संतर्प्य पुनर्जलमयैरुपचारैः प्रधानदेवं संपूज्य स्वात्मनि विसृजेत्। इति तर्पणम्। इदं च स्मार्ततर्पणानंतरं कर्तव्यम्॥ ततो गृहमागत्य पादौ प्रक्षाल्य पीठे प्राङ्मुख उपविश्य शिखां बद्ध्वा पूर्ववदाचम्य प्राणानायम्य करांगन्यासौ कृत्वा मूलमुच्चार्य ह्रां ह्रीं ह्रूं इति समस्तदेहे व्यापयेत्॥ ततस्ताम्रादिपात्रं साधारं पुरतः संस्थाप्य ह्रां ह्रौं सः इति मंत्रेण शुद्धजलेन पूर्वचंदनमलोड्य अक्षतान्निक्षिप्य अनेनैव मंत्रेणाभिमंत्र्य पुष्पादिना सूर्यं संपूज्य हस्ताभ्यां तत्पात्रमामस्तकमूर्द्धन्यजानुस्पृष्ट

महीतलः सूर्यमुद्वीक्ष्यमाणः ह्रां ह्रीं सः श्रीसूर्यायेदमर्घं स्वाहा इति शुद्धभूमौ क्षिपेत् ॥ ततः पूजागृहद्वारमागत्य
तत्र पूर्ववत्सामान्यार्घं संस्थाप्य तेन जलेनोद्धृतेन अस्त्राय फडिति द्वारं संप्रोक्ष्य, ॐद्वारश्रियै नमः ॥ ऊर्ध्वोदुम्बर
मध्ये गं गणपतये नमः ॥ ऊर्ध्वोदुंबरदक्षिणकोणे सं सरस्वत्यै० वामे नं नंदिने०दक्षशाखायां गं गंगायै०वामशाखायां
यं यमुनायै० इति संपूज्य गृहमध्ये निर्ऋतौ वास्तुपुरुषाय० ब्रह्मणे० गणपतये० वायवे० अक्षतानादाय उत्ति
ष्ठंतु अपसर्पंत्विति भूतान्युत्साद्य पूजाद्रव्याणि मूलमुच्चरन् दिव्यदृष्ट्या विलोकयेत् । ततः पृथ्वि त्वयेति आस
नमंत्रेण उदङ्मुखो यथाभ्यासमासने समुपविश्य मूलेन देवं ध्यायेत् ॥ प्राणानायम्य देशकालौ स्मृत्वा प्रत्य
वायपरिहारकामोऽहममुकशर्मा यथोपकल्पितैरुपचारैः श्रीबटुकभैरवं पूजयिष्ये, इत्युच्चार्य जलं भूमौ क्षिपेत् ॥
ततश्चंदनपुष्पाभ्यां मूलेन हस्तौ सुरभीकृत्याक्रांतं तत्कुसुमं नाराचबुद्ध्या अस्त्रमंत्रेण ईशान्यां प्रक्षिपेत् ॥ ततो
ऽस्त्रमंत्रेण तालत्रयं दिग्बन्धमग्निप्राकारं च विधाय वामांसे गुं गुरुभ्यो नमः ॥ दक्षांसे गं गणपतये नमः ॥ मूलमुच्चार्य
स्वपुरतः श्रीबटुकभैरवाय नमः इति प्रणम्य क्षेत्रपालाय नमः ॥ ततो मूलेन प्राणानायम्य भैरवपूजाधिकारसिद्धये
भूतशुद्धिमहं करिष्ये इति संकल्प्य यथाविधिना भूतशुद्धिं प्राणप्रतिष्ठामन्तर्मातृकाबहिर्मातृकान्यासान् बिन्दु
विसर्गसहितान् तथा सृष्टिस्थितिसंहारमातृकान्यासांश्च कृत्वा, ततः काममातृकाकलामातृका-श्रीबीजादिमा
तृकान्यासान्ते मूलमंत्रेण प्राणायामत्रयं कुर्यात् ॥ मूलमंत्रे पक्षद्वयम् ॥/ ॐ ह्रीं बटुकाय आपदुद्धारणाय
कुरु कुरु बटुकाय ह्रीं इत्येवं द्वाविंशत्यक्षरो मनुः ॥ रुद्रयामले शारदाकारेण तु प्रणवादिः शक्त्यन्त एकविंशत्य
क्षरो मंत्र उक्त इति ॥ अस्य श्रीबटुकभैरवमंत्रस्य बृहदारण्य ऋषिः ॥ अनुष्टुप् छंदः । श्रीबटुकभैरवो देवता । ह्रीं बीजम् ।
ह्रीं शक्तिः । आं कीलकम् । श्रीबटुकभैरवप्रीतये विनियोगः ॥ बृहदारण्यऋषये नमः शिरसि ॥ अनुष्टुप्छंदसे नमः
इति मुखे ॥ श्रीबटुकभैरवदेवतायै नमो हृदि ॥ ह्रीं बीजाय नमो गुह्ये ॥ ह्रीं शक्तये नमः पादयोः ॥ आंकी
लकाय नमः नाभौ स्तनांतरे वेति केचित् ॥ चतुर्विधपुरुषार्थसिद्ध्यर्थे विनियोगाय नमः सर्वांगे ॥ अथ पंचब्रह्मम
न्त्रन्यासः ॥ ह्रौं बौं ईशानाय नमः अंगुष्ठयोः ॥ ह्रैं बैं तत्पुरुषाय नमः तर्जन्योः ॥ हूं बुं अघोराय नमः मध्य
मयोः ॥ ह्रीं बीं वामदेवाय नमः अनामिकयोः ॥ ह्रां बां सद्योजाताय नमः कनिष्ठिकयोः ॥ पुनः ह्रौं बौं ईशा
नाय ऊर्ध्ववक्त्राय नमः शिरसि ॥ ह्रैं बैं तत्पुरुषाय पूर्ववक्त्राय नमः मुखे ॥ हूं बुं अघोराय दक्षिणवक्त्राय नमः
दक्षिणकर्णे ॥ ह्रीं बीं वामदेवाय उत्तरवक्त्राय नमः वामकर्णे । ह्रां बां सद्योजाताय पश्चिमवक्त्राय नमः चूडाधः इति
विन्यस्य ॥ पुनः, ह्रौं बौं ईशानाय नमः शिरसि ॥ ह्रैं बैं तत्पुरुषाय नमः मुखे ॥ हूं बुं अघोराय नमः हृदये ॥
ह्रीं बीं वामदेवाय नमः गुह्ये ॥ ह्रां बां सद्योजाताय नमः पादयोः ॥ एता एव मूर्तीर्विन्यसेत् ॥ अथ हृदया
दिन्यासाः । ह्रां बां हृदयाय नमः ॥ ह्रीं बीं शिरसे स्वाहा । हूं बुं शिखायै वषट् ॥ ह्रैं बैं कवचाय हुम् ॥ ह्रौं

बौं नेत्रत्रयाय वौषट् ॥ ह्रः बः अस्त्राय फट् ॥ ततोऽस्त्रमंत्रेण तालत्रयं छोटिकाभिर्दशदिग्बंधनं कुर्यात् ॥ अथैकाद शन्यासाः ॥ तत्रादौ प्रेतबीजन्यासः १ ॥ ॐ हस हौं हृदयाय नमः ॥ ॐ हस हौं शिरसे स्वाहा ॥ ॐ हस हौं शिखायै वषट् ॥ ॐ हस हौं कवचाय हुम् ॥ ॐ हस हौं नेत्रत्रयाय वौषट् ॥ ॐ हस हौं अस्त्राय फट् । इति प्रेतबीजन्यासः ॥ अथ सिंहबीजन्यासः ॥ २ ॥ ॐ हसक्षं नमः शिरसि ॥ ॐ हसक्षं नमः बाह्वोः ॥ ॐ हसक्षं नमः लिङ्गे ॥ ॐ हसक्षं नमः नाभौ ॥ ॐ हसक्षं नमः हस्तांगुलीषु ॥ ॐ हसक्षं नमः पादांगुलीषु ॥ अथ काणबीजन्यासः ३ ॥ ॐ झौं नमः ब्रह्मरंध्रे ॥ ॐ झौं नमः मुखे ॥ ॐ झौं नमः नेत्रद्वये ॥ ॐ झौं नमः ग्रीवायाम् ॥ ॐ झौं नमः नासापुटयोः ॥ ॐ झौं नमः कपोलयोः ॥ ॐ झौं नमः चिबुके ॥ ॐ झौं नमः ब्रह्मरंध्रे ॥ अथ सत्याबीजन्यासः ॥ ४ ॥ ॐ मलहों नमः पादयोः ॥ ॐ मलहों नमः हस्तयोः ॥ ॐ मलहों नमः करयोः ॥ ॐ मलहों नमः नेत्रयोः ॥ ॐ मलहों नमः कर्णयोः ॥ ॐ मलहों नमः मुखे ॥ ॐ मलहों नमः कुक्षिद्वये ॥ ॐ मलहों नमः लिंगे ॥ अथ महाश्रीबीजन्यासः ॥ ५ ॥ ॐ श्रूं नमःचिबुके ॥ ॐ श्रूं नमः पादयोः ॥ ॐ श्रूं नमः कर्णयोः ॥ ॐ श्रूं नमः हृदये ॥ ॐ श्रूं नमः मुखे ॥ ॐ श्रूं नमः पादयोः ॥ ॐ श्रूं नमः नाभौ ॥ ॐ श्रूं नमः पादयोः ॥ अथ प्राणबीजन्यासः ॥ ६ ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः मुखे ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः नाभौ ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः पादयोः ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः सव्यकुक्षौ ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः वामकुक्षौ ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः दक्षपादतले ॥ ॐ क्रूं नमः हृदये ॥ ॐ क्रूं नमः वामपादतले ॥ ॐ क्रूं नमः हृदये ॥ अथ घंटाबीजन्यासः ॥ ७ ॥ ॐ घ्रूं नमः गलघंटिकायाम् ॥ ॐ घ्रूं नमः नाभौ ॥ ॐ घ्रूं नमः घंटिकायाम् ॥ ॐ घ्रूं नमः हृदये ॥ अथ ख्यातिबीजन्यासः ॥ ८ ॥ ॐ ख्च्यूं नमः मस्तके ॥ ॐ ख्च्यूं नमः पादयोः ॥ ॐ ख्च्यूं नमः ग्रीवायाम् ॥ ॐ ख्च्यूं नमः नाभिमंडले ॥ ॐ ख्च्यूं नमः गले ॥ ॐख्च्यूं नमः हृदये ॥ ॐ ख्च्यूं नमः जंघयोः ॥ ॐ ख्च्यूं नमः नेत्रयोः ॐ ख्च्यूं नमः कर्णयोः ॥ ॐ ख्च्यूं नमः बाह्वोः ॥ ॐ ख्च्यूं नमः स्तनयोः ॥ अथ मूलबीजन्यासः ॥ ९ ॥ ॐ ॐ नमः हृदये ॥ ॐ ॐ नमः मुखे ॥ ॐ ॐ नमः पादयोः ॥ ॐ ॐ नमः हस्तयोः ॥ ॐ ॐ नमः कर्णयोः ॥ ॐ ॐ नमः नासापुटयोः ॥ अथ भ्रामरीबीजन्यासः १० ॐ भरलसहीं नमः मुखे ॥ ॐ भरलसहीं नमः नेत्रद्वये ॥ ॐ भरलसहीं नमः कर्णद्वये ॥ भरलसहीं नमः कपोलयोः ॥ ॐ भरलसहीं नमः गंडयोः ॥ ॐ भरलसहीं नमः कंठदेशे ॥ ॐ भरलसहीं नमः स्तनयोः ॥ ॐ भरलसहीं नमः हृदये ॥ ॐ भरलसहीं नमः पादयोः ॥ ॐ भरलसहीं नमः चिबुके ॥ ॐ भरलसहीं नमः मस्तके ॥ ॐ भरलसहीं नमः बाह्वोः ॥ ॐ भरलसहीं नमः स्कंधयोः ॥ ॐ भरलसहीं नमः दंतपंक्त्योः ॥ ॐ भरलसहीं नमः ब्रह्मरंध्रे ॥ ॐ भरलसहीं नमः

आधारे ॥ ॐ भरलसहीं नमः भ्रूमध्ये ॥ अथ आकुतीबीजन्यासः ११ ॥ ॐ नमरलमरक्षरशरहसीं नमः शिरसि ॥ ॐ नमरलमरक्षरशरहसीं नमः गंडयोः ॥ ॐ नमरलमरक्षरशरहसीं नमः वक्रे ॥ अथ कालबीजन्यासः १२ ॥ ॐ करलसरमरीं नमः नेत्रयोः ॥ ॐ करलसरमरीं नमः कर्णयोः ॥ ॐ करलसरमरीं नमः नाभौ ॥ ॐ करलसरमरीं नमः लिंगे ॥ ॐ करलसरमरीं नमः गुदे ॥ अथ विग्रबीजन्यासः १३ ॥ ॐ क्षरसरहसीं नमः कपोलयोः ॥ ॐ क्षरसरहसीं नमः ब्रह्मरंध्रे ॥ ॐ क्षरसरहसीं नमः दंतपंक्त्योः ॥ अथ श्रृंखलामहापराख्यबीजन्यासः ॥१४ ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः मस्तके ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः दक्षनेत्रे ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः वामनेत्रे ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः दक्षकर्णे ॥ ॐ सहसहलकलइशरवरवलवऊईंनमः वामकर्णे ॥ ॐ सहसहलकलइशरवरवलवऊईंनमः दक्षिणकपोले ॐ सहसहलकलइशरवरवलवऊईं नमः वामकपोले ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः दक्षगंडके ॥ ॐ सहसहलकलइशरवरवलवऊईं नमः वामगंडके ॥ ॐ सहसहलकलइशरवरवलवऊईं ममः चिबुके ॥ ॐ १९ गले ॥ ॐ १९ दक्षस्कंधे ॥ ॐ १९ वामकंधे ॥ ॐ १९ दक्षस्तने ॥ ॐ १९ वामस्तने ॥ ॐ १९ हृदये ॥ ॐ १९ दक्षकुक्षौ ॥ ॐ १९ वामकुक्षौ ॥ॐ १९ नाभौ ॥ ॐ १९ वक्षसि ॥ ॐ १९ दक्षजंघे ॥ ॐ १९ वामजंघे ॥ ॐ १९ लिंगे ॥ ॐ १९ दक्षमेढ्रे ॥ ॐ १९ वाममेढ्रे ॥ ॐ १९ मूलाधारे ॥ ॐ १९ दक्षगुल्फे ॥ ॐ १९ वामगुल्फे ॥ ॐ १९ दक्षपादे॥ ॐ १९ वामपादे ॥ ॐ १९ दक्षपादांगुलीषु ॥ ॐ १९ वामपादांगुलीषु ॥ ॐ १९ ब्रह्मरंध्रे ॥ ॐ १९ मूलाधारे ॥ ॐ १९ब्रह्मरंध्रे ॥ इति महापराख्यबीजन्यासः ॥ अथ श्रीबटुकांतर्मातृकान्यासः १५ ॥ ॐ श्रीं अं नमः आं नमः इं नमः ईं नमः उं नमः ऊं नमः ऋं नमः ॠं नमः ऌं नमः ॡं नमः एं नमः ऐं नमः ओंनमः औं नमः अं नमः श्रीं अः नमः कंठस्थाने ॥ ॐ श्रीं कं नमः खं नमः गं नमः घं नमः ङं नमः चं नमः छं नमः जं नमः झं नमः ञं नमः टं नमः ॐ श्रीं ठं नमः हृदये ॥ ॐ श्रीं डं नमः ढं नमः णं नमः तं नमः थं नमः दं नमः धं नमः नं नमः पं नमः ॐ श्रीं फं नमः नाभौ ॥ ॐ श्रीं बं नमः भं नमः मं नमः यं नमः रं नमः ॐ श्रीं लं नमः लिंगे ॥ ॐ श्रीं वं नमः शं नमः षं नमः ॐ श्रीं सं नमः मूलाधारे ॥ ॐ हं नमः ॐ क्षं नमः आज्ञाचक्रे न्यसेत् ॥ अथ बहिर्मातृकान्यासः १६ ॥ ॐ अं नमः ललाटे ॥ ॐ आं नमः मुखवृत्ते ॥ ॐ इं नमः दक्षनेत्रे ॥ ॐ ईं नमः वामनेत्रे ॥ ॐ उं नमः दक्षकर्णे ॥ ॐ ऊं नमः वामकर्णे ॥ ॐ ऋं नमः दक्षनासापुटे ॥ ॐ ॠं नमः वामनासापुटे ॥ ॐ ऌं नमः दक्षगंडे ॥ ॐ ॡं नम वामगंडे ॥ ॐ एं नमः ऊर्ध्वोष्ठे ॥ ॐ ऐं नमः अधरोष्ठे ॥ ॐ ओं नमः ऊर्ध्वदंतपंक्तौ ॥ ॐ औं नमः अधोदंतपंक्तौ ॥ ॐ अं नमः शिरसि ॥ ॐ अः नमः मुखाभ्यंतरे ॥ ॐ कं नमः दक्षबाहुमूले ॥ ॐ खं नमः दक्षकूर्परे ॥ ॐ गं नमः दक्ष

मणिबंधे ॥ ॐ घं नमः दक्षकरांगुलिमूले ॥ ॐ ङं नमः दक्षकरांगुल्यग्रे ॥ ॐ चं नमः वामबाहुमूले ॥ ॐ छं नमः वामकूर्परे ॐ जं नमः वाममणिबंधे ॥ ॐ झं नमः वामकरांगुलिमूले ॥ ॐ ञं नमः वामकरांगुल्यग्रे ॥ ॐ टं नमः दक्षपादमूले ॥ ॐ ठं नमः दक्षजानुनि ॥ ॐ डं नमः दक्षगुल्फे ॥ ॐ ढं नमः दक्षपादांगुलिमूले ॥ ॐ णं नमः दक्षपादांगुल्यग्रे ॥ ॐ तं नमः वामपादमूले ॥ ॐ थं नमः वामजानुनि ॥ ॐ दं नमः वामगुल्फे ॥ ॐ धं नमः वामपादांगुलिमूले ॥ ॐ नं नमः वामपदांगुल्यग्रे ॥ ॐ पं नमः दक्षपार्श्वे ॥ ॐ फं नमः वामपार्श्वे ॥ ॐ बं नमः पृष्ठवंशे ॥ ॐ भं नमः नाभौ ॥ ॐ मं नमः जठरे ॥ ॐ यं त्वगात्मने नमः हृदि ॥ ॐ रं असृगात्मने नमः दक्षांसे ॥ ॐ लं मांसात्मने नमः ककुदि ॥ ॐ वं मेदात्मने नमः वामांसे ॐ शं अस्थ्यात्मने नमः हृदादिदक्षकरांगुल्यग्रपर्यंतम् ॥ ॐ षं मज्जात्मने नमः हृदादिवामकरांगुल्यग्रपर्यंतम् ॥ ॐ सं शुक्रात्मने नमः नाभ्यादिहृदादिदक्षपादांगुल्यग्रपर्यंतम्॥ॐ हं जीवात्मने नमः हृदादिवामपदांगुल्यग्रपर्यंतम्॥ ॐ ळं परमात्मने नमः नाभ्यादिहृदयपर्यंतम् ॥ ॐ क्षं ज्ञानात्मने नमः हृदादिमुखपर्यंतं न्यसेत् ॥ इति बहिर्मातृकान्यासः ॥ अथ महासरस्वतीबीजमातृकान्यासः १७ ॥ ॐ कलडरसहरहक्षशरईं ललाटे ॥ ॐ कलडरसहरहक्षशरईं मुखवृत्ते ॥ ॐ कलडरसहरहक्षशरईं दक्षनेत्रे ॥ ॐ १२ वामनेत्रे ॥ ॐ १२ दक्षकर्णे॥ ॐ १२ वामकर्णे ॥ ॐ १२ दक्षनासापुटे ॥ ॐ १२ वामनासापुटे ॥ ॐ १२ दक्षगंडे ॥ ॐ १२ ऊर्ध्वोष्ठे ॥ ॐ १२ अधरोष्ठे ॥ ॐ १२ उर्ध्वदंतपंक्तौ ॥ ॐ १२ अधोदंतपंक्तौ॥ ॐ १२ शिरसि॥ ॐ १२ मुखाभ्यंतरे ॥ ॐ १२ दक्षबाहुमूले ॥ ॐ १२ दक्षकूर्परे ॥ ॐ १२ दक्षमणिबंधे ॥ ॐ १२ दक्षकरांगुलिमूले ॥ ॐ १२ दक्षकरांगुल्यग्रे ॥ ॐ १२ वामबाहुमूले ॥ ॐ १२ वामकूर्परे ॥ ॐ १२ वाममणिबंधे॥ ॐ १२ वामकरांगुलिमूले॥ॐ १२ वामकरांगुल्यग्रे ॥ ॐ १२ दक्षपादमूले ॥ ॐ १२ दक्षजानुनि ॥ ॐ १२ दक्षगुल्फे ॥ ॐ १२ दक्षपादांगुलिमूले ॥ ॐ १२ दक्षपादांगुल्यग्रे ॥ ॐ १२ वामपादमूले ॥ ॐ १२ वामजानुनि ॥ ॐ १२ वामगुल्फे ॥ ॐ १२ वामपादांगुलिमूले॥ ॐ १२ वामपादांगुल्यग्रे ॥ ॐ १२ दक्षपार्श्वे ॥ ॐ १२ वामपार्श्वे ॥ ॐ पृष्ठवंशे ॥ ॐ १२ नाभौ ॥ ॐ १२ जठरे ॥ ॐ १२ हृदि ॥ ॐ १२ दक्षांसे ॥ ॐ १२ ककुदि ॥ ॐ १२ हृदादिदक्षकरांगुल्यग्रपर्यंतम् ॥ ॐ १२ हृदादिवामकरांगुल्यग्रपर्यंतम् ॥ ॐ१२ हृदादिदक्षपादांगुल्यग्रपर्यंतम् ॥ ॐ १२ हृदादिवामपादांगुल्यग्रपर्यंतम् ॥ ॐ १२ नाभ्यादिहृदयपर्यंतम् ॥ ॐ १२ हृदादिमुखपर्यंतं न्यसेत् ॥ इति महासरस्वतीबीजमातृकान्यासः ॥ अथ पीठन्यासः ॥ १८ ॥ ॐ मंडूकाय नमः मूलाधारे ॥ ॐ कालाग्निरुद्राय नमः स्वाधिष्ठाने ॥ ॐ कूर्माय नमः नाभौ ॥ ॐ अनंताय नमः ॥ ॐ पृथ्व्यै नमः ॥ ॐ सुधांबुधये नमः ॐ रत्नद्वीपाय नमः ॥ ॐ मणिमंडपाय नमः ॥ ॐ कल्पवृक्षाय नमः ॥ ॐ रत्नवेदिकायै नमः हृदि ॥ ॐ अधर्माय नमः दक्षांसे ॥ ॐ ज्ञानाय नमः

वामांसे ॥ ॐ वैराग्याय नमः वामोरौ ॥ ॐ ऐश्वर्याय नमः दक्षोरौ ॥ ॐ आनन्दकन्दायनमः ॥ ॐ संविन्नालाय नमः ॥ ॐ सर्वतत्त्वपद्माय नमः ॥ ॐ प्रकृतिमयपत्रेभ्यो नमः ॥ विकारमयकेसरेभ्यो नमः ॥ ॐ पंचाशद्वर्णबीजाढ्यकर्णिकायै नमः ॥ ॐ अर्कमण्डलाय नमः ॥ ॐ सोममण्डलाय नमः ॥ ॐ मं वह्निमण्डलाय नमः ॥ ॐ सं सत्त्वाय नमः ॥ ॐ रं रजसे नमः ॥ ॐ आं आत्मने नमः ॥ ॐ अं अंतरात्मने नमः ॥ ॐ पं परमात्मने नमः॥ ॐ ह्रीं ज्ञानात्मने नमः ॥ ॐ मां मायातत्त्वाय नमः॥ ॐ विं विद्यातत्त्वाय नमः॥ ॐ शिं शिवतत्त्वाय नमः॥ ॐ पं परतत्त्वाय नमः हृदये ॥ अथ हृद्येव पूर्वाद्यष्टदिक्षु—ॐ वां वामायै नमः ॥ ॐ ज्यां ज्येष्ठायै नमः ॥ ॐ रौं रौद्र्यै नमः ॥ ॐ कां काल्यै नमः ॥ ॐ कं कलविकरण्यै नमः ॥ ॐ बं बलविकरण्यै नमः ॥ ॐ वं बलप्रमथिन्यै नमः ॥ ॐ सं सर्वभूतदमन्यै नमः ॥ ॐ मं मनोन्मन्यै नमः ॥ ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायअनंताय योगपीठात्मने नमः ॥ इति सर्वशैवमंत्रेषु साधारणोऽयं पीठन्यासः ॥ अथ वक्ष्यमाणं देवयंत्रं पूजनं विनैव केवल पीठमध्ये संस्थाप्य पश्चात्पात्रासादनं कुर्यात् ॥ ततस्तत्पूजनमिति ॥ अथ पात्रासादनमुक्तं कुलार्णवे— स्वर्णरूप्यशिलाकूर्मकपालालाबुमृन्मयम् ॥ नारिकेरं च शंखश्च मुक्ताशुक्तिसमुद्भवम् ॥ १ ॥ पुण्यवृक्षसमुद्भूतं पात्रं सल्लोलितं शुभम् ॥ २ ॥ सल्लोलं वर्तुलाकृति, भगाकाराण्यपि उक्तानि ॥ साध्यसाधकयोर्मध्ये षट्त्रिंशदङ्गुलं भवेत् ॥ द्वादशांगुलमूर्ध्वं च अधोभागे तथाङ्गुलम् ॥ ३ ॥ द्वादशांगुलमध्यं तु तत्र संस्थापयेद् बुधः ॥ स्वार्थं च द्वादशं त्यक्त्वा देवार्थं द्वादशं त्यजेत् ॥ ४ ॥ द्वादशाङ्गुलमध्यस्थं तत्र चार्घ्यं निधापयेत् ॥ ५ ॥ आदौ कुंभे तथा शंखं श्रीपात्रं शक्तिपात्रकम् ॥ गुरुपात्रं वीरपात्रं बलिपात्रं तथैव च ॥ ६ ॥ अथ कलशशंखादीनां स्थापनम् ॥ तत्र सांबुकलशस्थापनम् ॥ पूर्वस्थापितसामान्यार्घपात्रस्य वामभागे सांबुकलशं स्थापयेत् वा स्वदक्षिणभागे संस्थापयेत् । तत्रादौ यक्षकर्दममिश्रितजलेन भूमिं विलिप्य त्रिकोणषट्कोणवृत्तचतुरस्रं यंत्रं श्वासानुसारेण ऊर्ध्वकरे मत्स्यमुद्रया करपुटाभ्यां मंडलं कृत्वा सामान्यार्घोदकेनाभ्युक्ष्य शंखमुद्रया मंडलं स्पर्शयेत् ॥ ततस्त्रिकोणांतर्मार्यां विलिख्य त्रिकोणेषु कूटत्रयेण संपूज्य मूलस्य खंड त्रयं कुर्यात् ॥ यथा-अग्निकोणे प्रथमकूटं संपूज्य दक्षिणकोणे द्वितीयं कूटं संपूज्य, कमकोणे तृतीयकूटं संपूजयेत् ॥ अथ षट्कोणेषु षडंगानि संपूजयेत् । यथा—अग्निकोणेषु हृदयशक्तिं संपूज्य, ईशान्ये शिरःशक्तिं संपूज्य, वायव्ये शिखाशक्तिं संपूज्य, नैर्ऋत्ये कवचशक्तिं संपूज्य, त्रिकोणमध्ये नेत्रशक्तिं संपूज्य, द्वारे अस्त्रशक्तिं संपूज्य, तद्बहिर्वर्त्तुले आकारादिक्षकारांतां मातृकां संपूज्य, तद्बहिश्चतुरस्रे पूर्वद्वारे उड्यान पीठाय नमः ॥ दक्षिणद्वारे जालंधरपीठाय नमः ॥ पश्चिमद्वारे पूर्णगिरिपीठाय नमः ॥ उत्तरद्वारे कामगिरि पीठाय नमः ॥ इति मंडलं संपूज्य, ॐ ह्रीं आधारशक्तिभ्यो नमः इति संपूज्य मूलेन नमः इति आधारं

प्रक्षाल्य मंडलोपरि संस्थापयेत् ॥ अथ वह्निकलापूजनम् ॥ ततः प्रथमकूटमुच्चार्य धर्मप्रददशकलाव्याप्तात्मने वह्निमंडलाय नमः फट् इति कलशं प्रक्षाल्य, आधारोपरि हस्तद्वयेन कलशं संस्थाप्य रक्तवस्त्रमाल्यादिना भूषयित्वा वह्निकलां यजेत् ॥ यथा–यं धूम्रार्चिषे नमः ॥ रं ऊष्मायै० ॥ लं ज्वलिन्यै० ॥ वं ज्वालिन्यै० ॥ शं विस्फुलिंगिन्यै० ॥ षं सुश्रियै० ॥ सं सुरूपायै० ॥ हं कपिलायै ॥ ळं हव्यवाहायै० ॥ क्षं कव्यवाहायै० नमः इति ॥ अथ सूर्यकलापूजनम् ॥ द्वितीयकूटमुच्चार्य अर्थप्रदद्वादशकलाव्याप्तात्मने सूर्यमंडलाय नमः ॥ शुद्धजलमापूर्य सूर्यस्य द्वादशकलाः पूजयेत् ॥ यथा–ॐ कं भं तपिन्यै नमः ॥ ॐ खं बं तापिन्यै० ॥ ॐ गं फं धूम्रायै नमः ॥ ॐ घं पं मरीच्यै० ॥ ॐ ङं नं ज्वालिन्यै० ॥ ॐ चं धं रुच्यै० ॥ ॐ छं दं सुषुम्णायै० ॥ ॐ जं थं भोगदायै० ॥ ॐ झं तं विश्वायै० ॥ ॐ ञं णं बोधिन्यै० ॥ ॐ टं ढं धारिण्यै० ॥ ॐ ठं डं क्षमायै नमः इति ॥ अथ सोमकलापूजनम् ॥ तृतीयकूटमुच्चार्य कामप्रदषोडशकलाव्याप्तात्मने सोममंडलाय नमः ॥ जलमापूर्य सोमस्य षोडशकलाः पूजयेत् ॥ यथा–ॐ अं अमृतायै नमः ॥ ॐ आं मानदायै० ॥ ॐ इं पूषायै० ॐ ईं तुष्ट्यै० ॥ ॐ उं पुष्ट्यै० ॥ ॐ ऊं रत्यै० ॥ ॐ ऋं धृत्यै० ॥ ॐ ॠं शशिन्यै० ॥ ॐ ऌं चंद्रिकायै० ॥ ॐ ॡं कांत्यै० ॥ ॐ एं ज्योत्स्नायै० ॥ ॐ ऐं श्रियै० ॥ ॐ ओं प्रीत्यै० ॥ ॐ औं गदायै० ॥ ॐ अं पूर्णायै नमः ॥ ॐ अः पूर्णामृतायै० ॥ ॐ सोममंडलाय षोडशकलात्मने नमः इति गंधपुष्पाभ्यां सम्पूज्य मत्स्यमुद्रयाऽऽच्छाद्य कवचेनावगुंठ्य चक्रेण संरक्ष्य धेनुमुद्रयामृतीकृत्य तीर्थमावाह्य ब्रह्मांडोदरतीर्थानि ध्यायेत् ॥ इमं मे गंगे० ॥१॥ गन्धपुष्पाभ्यां संपूजयेत् ॥ अथ ध्यानं ॥ सर्वानंदमयेति श्लोकेन॥इति सांबुकलशस्थापनविधिः ॥ अथ सुधाकुंभस्थापनविधिः ॥ स्ववामे त्रिकोणषट्कोणवृत्तचतुरस्रमंडलं कृत्वा शंखमुद्रया मंडलं स्पर्शयेत्॥त्रिकोणेषु कूटत्रयं पूजयेत्तद्यथा-अग्निकोणे प्रथमकूटं सं०॥दक्षिणकोणे द्वितीयकूटं सं० ॥ वामकोणे तृतीयकूटं सं०॥तद्बहिः षट्कोणे कूटत्रयं द्विरावृत्त्या वामावर्तेन संपूजयेत् ॥ दक्षिणमार्गिणः दक्षिणावर्तेनेत्ययं विशेषः ॥ वर्त्तुले अकारादिक्षकारांतां मातृकां संपूज्य, अं नमः आं नमः इत्यादि ॥ तद्बहिश्चतुरस्रे षडंगानि संपूजयेत् । यथा अग्निकोणे हृदयशक्ति सं० ॥ ईशान्ये शिरःशक्ति सं० ॥ वायव्ये शिखाशक्ति सं० ॥ नैर्ऋत्ये कवचशक्ति सं० ॥ त्रिकोणमध्ये नेत्रशक्ति सं० ॥ द्वारे–अस्त्रशक्ति सं० ॥ पूर्वद्वारे–उड्यानपीठाय नमः ॥ दक्षिणद्वारे–जालंधरपीठाय नमः ॥ पश्चिमद्वारे पूर्णगिरिपीठाय नमः ॥ उत्तरद्वारे–कामपीठाय नमः ॥ इतिचतुःपीठानि सं० ॥ एवं मंडलं संपूज्य, ॐ ह्रीं आधारशक्त्यै नमः ॥ इति गंधपुष्पाभ्यां संपूज्य, नम इत्याधारं प्रक्षाल्य मंडलोपरि संस्थाप्य प्रथमकूटमुच्चार्य ॐधर्मप्रदमदशकलाव्याप्तात्मने वह्निमंडलाय नमः ॥ अथ वह्निकलां यजेत् ॥ ॐ यं धूम्रार्चिषे नमः । ॐ रंऊष्मायै नमः ॥ ॐ लं ज्वलिन्यै नमः॥ ॐ वं ज्वालिन्यै नमः॥ॐ शं विस्फुलिंग्यै नमः॥ ॐ षं सुश्रियै०॥ ॐ सं सुरूपाय

नमः ॥ ॐ हं कपिलायै नमः ॥ ॐ ळं हव्यवाहायै नमः ॥ ॐ क्षं कव्यवाहायै नमः इति संपूज्य, अस्त्राय फट् इति पात्रं प्रक्षाल्य रक्तवस्त्रमाल्यादिना भूषयित्वा रत्नखचितं तत्पात्रं त्रिपादकाधारोपरि देवीबुद्ध्या संस्थाप्य द्वितीयकूटमुच्चार्य ॐ अर्थप्रदद्वादशकलाव्याप्तात्मने सूर्यमंडलाय नमः इत्यनेन कलशे स्पृष्ट्वा सूर्यकलां यजेत्तद्यथा— ॐ कं भं तपिन्यै नमः ॥ ॐ खं बं तापिन्यै नमः ॥ ॐ गं फं धूम्रायै नमः ॥ ॐ घं पं मरीच्यै नमः॥ ॐ ङं नं ज्वालिन्यै नमः ॥ ॐ चं धं रुच्यै॰ ॥ ॐ छं दं सुषुम्णायै नमः ॥ ॐ जं थं भोगदायै॰ ॥ ॐ झं तं विश्वायै॰ ॥ ॐ ञं णं बोधिन्यै नमः ॥ ॐ टं ढं धारिण्यै॰॥ ॐ ठं डं क्षमायै नम इति संपूज्य, तृतीयकूटमुच्चार्य कामप्रदषोड शकलाव्याप्तात्मने सोममंडलाय नमः ॥ अथ सोमकला ॥ सोमस्य षोडशकलाः पूजयेत् ॥ यथा—ॐ अं अमृतायै नमः ॥ ॐ आं मानदायै॰ ॥ ॐ इं पूषायै॰ ॥ ॐ ईं तुष्ट्यै॰ ॥ ॐ उं पुष्ट्यै॰ ॥ ॐ ऊं रत्यै॰ ॥ ॐ ऋं धृत्यै॰ ॥ ॐ ॠं शशिन्यै॰॥ॐ ऌं चंद्रिकायै॰ ॥ ॐ ॡं कांत्यै॰॥ ॐ एं ज्योत्स्नायै॰ ॥ ॐ ऐं श्रियै॰॥ ॐ ओं प्रीत्यै॰ ॥ ॐ औं अंगदायै ॥ ॐ अं पूर्णायै नमः ॥ ॐ अः पूर्णामृतायै॰ ॥ ॐ सोममंडलाय षोडश कलात्मने नम इति गन्धपुष्पाभ्यां सम्पूज्य, सुवासिततीर्थं वस्त्रगालितमन्यपात्रे उद्धृत्य सुधागायत्रीं दशधा जपेत् ॥ॐ सुधादेवीं विद्महे कामेश्वर्य्यै च धीमहि ॥ तन्नो रक्ताक्षिः प्रचोदयात् ॥ मूलमन्त्रं दशधा जपेत् ॥ अथ सुधायाः शापमोचनम् ॥ एवमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ॥ कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥१॥ सूर्यमंडलसंभूते वरुणालयसंभवे ॥ आस्यबीजमये देवि शुक्रशापाद्विमुच्यताम् ॥ २ ॥ वेदानां प्रणवो बीजं ब्रह्मानंदमयं यदि ॥ तेन सत्येन ते देवि ब्रह्महत्या व्यपोहतु ॥ ३ ॥ इति मंत्रत्रयं धृत्वा पठेत्त्रिधा ॥ ॐ सां सीं सूं सैं सौं सः शुक्रशापविमोचकायै सुरादेव्यै नमः इति द्वादशधा जपेत् ॥ ब्रां ब्रीं ब्रूं ब्रैं ब्रौं ब्रः ब्रह्मशापविमोचकायै सुरादेव्यै नमः इति दशधा जपेत् ॥ ॐ ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः सुधाकृष्णशापं विमोचय २ अमृतं स्रावय २ स्वाहेति दशधा जपेत् ॥ ॐ रां रीं रूं रैं रौं रः रुद्रशापविमोचकायै सुरादेव्यै नमः ॥ इति शुक्रब्रह्म कृष्णरुद्रशापविमुक्तिः ॥ अथ तत्र कलशे दशदोषनिवारणं कुर्यात् ॥ ॐ ह्रीं क्रीं परमस्वामिनी परमाकाशशून्यवाहिनी चंद्रसूर्याग्निभक्षिणी त्वं पात्रं विश २ स्वाहा। घटोपरि दशधा जपेत् ॥ ॐ ऐं ह्रीं श्रीं महेश्वराय विद्महे सुधादेव्यै च धीमहि। तन्नोऽर्द्धनारीश्वरः प्रचोदयात् ॥ इति दशधा जपेत् ॥ ॐ ऐं ह्रीं श्रीं हृत्क्ष्ल्क्ष्फ्रें पथिकदेवताभ्यो हुं फट् स्वाहा ॥ १ ॥ ॐ ४ यं रं लं आं आस्फालिनी ग्रामचांडालिनी हुं फट् स्वाहा ॥ २ ॥ ॐ ४ ह्रौं ह्रां संगम स्पर्शचांडालिनी हुं फट् स्वाहा ॥३॥ ॐ ४ फ्रें घं ङं लं क्षं दृष्टिचांडालिनी हुं फट् स्वाहा ॥ ४ ॥ ॐ ग्लौं लां क्रोधचांडालिनी हुं फट् स्वाहा ॥५॥ ॐ ४ अं सृष्टिचांडालिनी हुं फट् स्वाहा ॥ ६ ॥ ॐ ४ आं क्रों घटचांडालिनी हुं फट् स्वाहा ॥७॥ ॐ ४ चं छं तपनीयबुधचांडालिनी हुं फट् स्वाहा ॥८॥ ॐ ४ क्षं आं क्रों क्लीं निर्दयचांडा

लिनी हुं फट् स्वाहा ॥९॥ ॐ ४ सुं छं स्रों स्रौं खेदय २ सर्वजनदृष्टिस्पर्शदोषाय हुं फट् स्वाहा ॥१०॥ इत्युक्त्वा कुंभोपरि अक्षतान्निक्षिपेत् ॥ ततो ॐ हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ १ ॥ इत्यनेन त्रिवारं द्रव्योपरि पठेत्, गंधपुष्पाणि निक्षिपेदिति दोषनिवारणम्॥द्रव्यमध्ये आनंदभैरवमानंदभैरवीं च ध्यायेत् । तद्यथा-सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम्॥ अष्टादशभुजं देवं पंचवक्त्रं त्रिलोचनम् ॥ १ ॥ अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् ॥ वृषारूढं नीलकण्ठं सर्वाभरणभूषितम् ॥ २ ॥ कपालखट्वाङ्गधरं घंटाडमरुनादिनम् ॥ पाशांकुशधरं देवं गदामुशलधारिणम् ॥ ३ ॥ खड्गखेटकपट्टीशमुद्गरं शूलकुंतलम् ॥ विधृतं खेटकं मुंडं वरदाभयपाणिकम् ॥ ४ ॥ लोहितं देवदेवेशं भावयेत् साधकोत्तमः ॥ ॐ ऐं ह्रीं श्रीं दत्क्ष्म्लफ्रें वाहसक्षमलवरयूं आनंदभैरवाय वौषट् । इत्यानंदभैरवं त्रिः संपूजयेत् ॥ अथ-भावयेच्च सुरां देवीं चंद्रकोटियुतप्रभाम् ॥ हेमकुंदेन्दुधवलां पंचवक्त्रां त्रिलोचनाम् ॥ १ ॥ अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम् ॥ प्रहसंतीं विशालाक्षीं देवदेवस्य संमुखीम् ॥ २ ॥ एवं ध्यात्वा ॐ ऐं ह्रीं श्रीं सहक्षमलवरयीं सुधादेव्यै वौषट् । इत्यानन्दभैरवीं संपूजयेत् ॥ इति भैरवभैरवीध्यानपूजा ॥ अथ द्रव्यमध्ये शक्तिचक्रं विलिख्य, तदभावे त्रिकोणदक्षावर्तंत विलिख्य ऊर्ध्वरेखायाम्-अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः दक्षिणरेखायाम्-कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं ॥ उत्तररेखायाम्-थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं, उभयोः पार्श्वयोः लं नमः क्षं नमः त्रिकोणमध्ये कामकला ईं विलिख्य द्रव्यमध्ये अमृतत्वं विचिंतयेत् ॥ तत्र मंत्रः ॥ ॐ ऐं ह्रीं श्रीं ह्रौं अमृते अमृतोद्भवे अमृतवर्षिणि अमृतस्वरूपिणि अमृतं स्रावय २ शुक्रा दिशापात्सुरां मोचय २ मोचिकायै नमः॥ततो ह्रीं जूं सः मृत्युंजयमंत्रं द्वाविंशतिवारं कुंभोपरि जपित्वा धेनुमुद्रया वमिति बीजमष्टधा प्रजप्य पश्चाद्घटं धृत्वा मूलमंत्रं अष्टधा पठित्वा, पावमानः परानंदः पावमानः परो रसः ॥ पावमानं परं ज्ञानं तेन ते पावयाम्यहम् । इति अभिमंत्रयेत् ॥ अथ द्रव्यशुद्धिः । तदुक्तं श्यामारहस्ये ॥ अमृतं चिंतयेद्द्रव्यमष्टधा चामृतं जपेत् ॥ अष्टधा मूलमंत्रं च जपेद्धृत्वा घटं ततः ॥ १ ॥ पश्चान्मुद्रां प्रदर्श्य, वमिति धेनुमुद्रयामृतीकृत्य मत्स्यमुद्रयाच्छाद्य कवचेनावगुंठ्य चक्रेण संरक्ष्य अस्त्रेण छोटिकाभिर्दशदिग्बंधनं कुर्यात् ॥ अथ कलशध्यानम् ॥ देवदानवसंवादे मथ्यमाने महोदधौ ॥ उत्पन्नोऽसि महाकुंभ विष्णुना विधृतः करे ॥ १ ॥ त्वत्तोये सर्वदेवाः स्युः सर्वे वेदाः समाश्रिताः ॥ त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ २ ॥ 
शिवस्त्वं च शिवासि त्वं विष्णुस्त्वं च प्रजापतिः ॥ आदित्याद्या ग्रहाः सर्वे विश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयि तिष्ठंति कलशे यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥ ४ ॥ त्वदालोकनमात्रेण भुक्तिमुक्तिफल महत् ॥ सान्निध्यं कुरु भो कुंभ प्रसन्नो भव सर्वदा ॥ ५ ॥ इति ध्यात्वा घटसूक्तं पठेत् ॥ समुद्रे मथ्य

माने तु क्षीरोदे सागरोत्तमे ॥ तत्रोत्पन्नां सुरां ध्यायेत्कन्यकारूपधारिणीम् ॥ ६ ॥ अष्टादशभुजां देवीं रक्तान्ताय
तलोचनाम् ॥ आपीनवर्णां स्वर्गाभां बहुरूपां परां सुराम् ॥ ७ ॥ सा सर्वैः संस्तुता सर्वदेवानामभयंकरी ॥ या
सुरा सा रमा देवी यो गंधः स जनार्दनः ॥ ८ ॥ यो वर्णः स भवेद्ब्रह्मा यो मदः स महेश्वरः ॥ स्वादे तु संस्थितः.
सोमः शब्दसंस्थो हुताशनः ॥ ९ ॥ इच्छायां मन्मथो देवः पाताले तु च भैरवः ॥ घटो ब्रह्मा रसो विष्णुर्विदवो
रुद्र एव च ॥१०॥ हुंकार ईश्वरः प्रोक्तो व्योमादेस्तु सदाशिवः ॥ घटमूले स्थितो ब्रह्मा घटमध्ये तु माधवः ॥ ११ ॥
घटकण्ठे नीलकण्ठो घटाग्रे सर्वदेवताः ॥ लघ्वी हि वारुणी देवी महामांसचरुप्रिया ॥ १२ ॥ सर्वविद्या तु या
देवी सुरादेवि नमोऽस्तु ते ॥ अनेन घटसूक्तेन द्रव्यशुद्धिः प्रजायते ॥ १३ ॥ अथ कलशे प्राणप्रतिष्ठा ॥ ॐ आं
ह्रीं क्रों यं रं लं वं शं षं सं हं सः सोहं श्रीमद्बटुकभैरवस्य आधारसहितकलशेऽस्मिन् अग्निसूर्यसोमकलानां
प्राणा इह प्राणाः सुखं चिरं तिष्ठंतु ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः सोहं श्रीमद्बटुकभैरवस्यास्मिन्क
लशे जीवः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुर्जिह्वाश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेति प्राणप्रतिष्ठा॥
गंधादिभिः कलशं संपूजयेत् ॥ तत्र कलशे चतुर्दिक्षु पंचरत्नानि पूजयेत् ॥ पूर्वे ग्लूं गगनरत्नाय नमः ॥ दक्षिणे
स्थूं स्वर्गरत्नाय नमः ॥ पश्चिमे प्लूं पातालरत्नाय नमः ॥ उत्तरे म्लूं मर्त्यरत्नाय नमः ॥ मध्ये न्लूं नागरत्नाय नमः ॥
एवं पंचरत्नानि संपूज्य पंचमुद्राभिर्नमस्कुर्यात् ॥ अथ कलशबलिः ॥ ततो कुंभसमीपे रक्तचंदनसिंदूरकुंकुमा
न्येकत्र मेलयित्वा तेन त्रिकोणवृत्तचतुरस्रमंडलं कृत्वा तत्र सर्वपथिकदेवेभ्यो नमः इति गंधपुष्पाभ्यां संपूज्य तदु
परि द्रव्यशुद्धिमीनमुद्रान्वितं बलिं निधाय तत्त्वमुद्रया बलिमुत्सृज्य ॥ ह्रीं श्रीं सर्वपथिकदेवेभ्यो नम इति
मंत्रेण बलिं निधाय तं बलिं वामपाणिना कलशोपरि त्रिधा भ्रामयित्वा मूलमुच्चरन् पूजाबाह्ये निक्षिपेत् ॥
॥ इति बलिः ॥ इति सुधाकुंभस्थापनविधिः ॥ अथ शुद्धिस्थापनविधिः ॥ कुंभस्य वामतः शुद्धिं संस्थाप्य,
अग्निमंडलाय नमः ॥ धर्मप्रददशकलात्मने शुद्धिपात्राधाराय नमः इत्याधारे अग्निकलाभिः संपूज्य ॥ क्लीं
सूर्यमंडलाय अर्थप्रदद्वादशकलात्मने शुद्धिपात्राय नमः इति सोमकलाभिः संपूज्य, धेनुमुद्रां प्रदर्श्य, उद्बुध्यस्व
पशो त्वं हि न पशुस्त्वं शिवोऽसि भोः ॥ शिवोत्कृत्यमिदं पिंडमतस्त्वं शिवतां व्रज.॥ पशुपाशाय विद्महे
शिरश्छेदाय धीमहि ॥ तन्नो छागः प्रचोदयात् " इति त्रिवारं जपेत् ॥ इति शुद्धिसंस्कारः ॥ अथ शंखस्थापनम् ॥
तमेव सामान्यार्घमिति वदति ॥ अथ स्थापनम् ॥ स्वपुरतः सुधाकुंभसमीपे त्रिकोणवृत्तचतुरस्रं मंडलं कृत्वा पूर्व
वन्मंडलं संपूज्य, ॐ ह्रीं आधारशक्त्यै नमः इति संपूज्य ततो मंडलोपरि आधारत्रिपदीं संस्थाप्य, ततः प्रथम
कूटमुच्चार्य, ॐ धर्मप्रददशकलात्मने वह्निमंडलाय नमः इति संपूज्य, पूर्वोक्तवद्वह्निकलां यजेत् ॥ ततः
शंखं प्रक्षाल्य, सुवासितगंधपुष्पादियुक्तशंखमाधारे संस्थाप्य, द्वितीयकूटमुच्चार्य, अर्थप्रदद्वादशकला

व्याप्तात्मने सूर्यमंडलाय नमः पूर्वोक्तवत्सूर्यकलां यजेत् ॥ ततो गंगे च यमुने चैवेति अंकुशमुद्रया सूर्यमंडलात्तीर्थान्यावाह्य मूलमुच्चरन्छुद्धजलमापूर्य चंद्रकलां यजेत् ॥ तृतीयकूटमुच्चार्य ॐ कामप्रदषोडशकलाव्याप्तात्मने सोममंडलाय नमः इतिगंधपुष्पाभ्यां संपूज्य, मूलं दशधा जपेदिति ॥ इति शंखस्थापनम् ॥ अथ विशेषार्घस्थापनम् ॥ आत्मश्रीचक्रयोर्मध्ये भूमिजानुकः साधकः यक्षकर्दमेन त्रिकोणषडस्रवृत्तचतुरस्रं मंडलं कुर्यात् ॥ यक्षकर्दममाह धन्वंतरिः–" कर्पूरागरुकस्तूरी कुंकुमं चंदनं तथा ॥ महासुगन्धमित्युक्तं नामतो यक्षकर्दमः " ॥ इति ॥ १ ॥ अथ सांबुकलशोक्तवन्मण्डलं संपूज्य ॐ आधारशक्त्यै नमः इति संपूज्य त्रिपदि आधारं प्रक्षाल्य मंडलोपरि संस्थाप्य, सामान्यार्घजलेनाभ्युक्ष्य, प्रथमकूटमुच्चार्य, धर्मप्रदमदशकलात्मने श्रीमन्महाबटुकभैरवाय वह्निमंडलाय नमः ॥ ततः कलां यजेत् ॥ ॐ यं धूम्रार्चिषे नमः ॥ ॐ रं ऊष्मायै नमः ॥ ॐ लं ज्वलिन्यै० ॥ ॐ वं ज्वालिन्यै० ॥ ॐ शं विस्फुलिंगिन्यै० ॥ ॐ षं सुश्रियै० ॥ ॐ सं सुरूपायै० ॥ ॐ हं कपिलायै० ॥ ॐ लं हव्यवाहायै० ॥ ॐ क्षं कव्यवाहायै० इति पूजयेत् ॥ फट् इति मंत्रेण अर्घपात्रं प्रक्षाल्य आधारोपरि हस्तद्वयेन संस्थाप्य द्वितीयकूटमुच्चार्य, ॐ अर्थप्रदद्वादशकलाव्याप्तात्मने श्रीमन्महाबटुकभैरवाय सूर्यमंडलाय नमः ॥ ततःसूर्यकलां यजेत् ॥ ॐ कं भं तपिन्यै० ॐ खं बं तापिन्यै० ॐ गं फं धूम्रायै० ॥ ॐ घं पं मरीच्यै० ॥ ॐ ङं नं ज्वालिन्यै० ॥ ॐ चं धं रुच्यै० ॥ ॐ छं दं सुषुम्णायै० ॥ ॐ जं थं भोगदायै० ॥ ॐ झं तं विश्वायै ॥ ॐ ञं णं बोधिन्यै० ॥ ॐ टं ढं धारिण्यै० ॥ ॐ ठं डं क्षमायै० ॥ इति कलां गंधपुष्पाभ्यां संपूज्य ततः कुंभाद्बिन्दुमुद्धृत्य पात्रे वामहस्तेन तत्त्वमुद्रया शुद्धिं गृहीत्वा दक्षिणहस्तेन तीर्थमुच्चरन् मूलमंत्रं विलोममातृकाश्च पठन् कारणामृतेन त्रिभागं प्रदर्श्य जलेन भागमेकं पूरयेत् ॥ विलोममातृका यथा––क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अमिति, अनेन पात्रं प्रपूर्य, पुष्पेण ह्रीं श्रीं बीजेनालोड्य, पुष्पं निरस्य, निक्षिप्य, ततस्तृतीयकूटमुच्चार्य ॐ कामप्रदषोडशकलाव्याप्तात्मने श्रीमन्महाबटुकभैरवाय चंद्रमंडलाय नमः ॥ ततश्चंद्रकलां यजेत् ॥ ॐ अं अमृतायै० ॥ आं मानदायै० ॥ इं पूषायै० ॥ ईं तुष्ट्यै० ॥ उं पुष्ट्यै० ॥ ऊं रत्यै० ॥ ऋं धृत्यै० ॥ ॠं शशिन्यै० ॥ ऌं चंडिकायै० ॥ ॡं कांत्यै० ॥ एं ज्योत्स्नायै० ॥ ऐं श्रियै० ॥ ओं प्रीत्यै० ॥ औं अङ्गदायै० ॥ अं पूर्णायै० ॥ अः पूर्णामृतायै० इतिगन्धपुष्पाभ्यां संपूज्य ततो द्रव्यमध्ये कुशेन त्रिकोणषट्कोणवृत्तं चतुरस्रं कृत्वा, त्रिकोणे ऊर्ध्वरेखाम् अं नमः इत्यादि अः नमः इत्यन्तं संपूज्य, दक्षिणरेखायां कं नम इत्यादि तं नम इत्यन्तं संपूज्य, उत्तररेखायां थं नमः इत्यादि हं नमः इत्यंतं संपूज्य, उभयोः पार्श्वयोः लं नमः क्षं नमः, मध्ये ईं नमः त्रिकोणेषु त्रिकूटानि संपूज्य, षट्कोणेषुॐहृदयशक्तिं नमः॥शिरःशक्तिं०॥कवचशक्तिं०॥ नेत्रशक्तिं०॥ अस्त्रशक्तिं०

वर्तुले अकारादिक्षकारांतां मातृकां संपूज्य चतुरस्रे ॐ पूर्णशैलाय नमः ॥ ॐ उड्यानाय०॥ ॐजालंधराय नमः ॥ ॐकामकलायै नमः इति संपूज्य गंगे च यमुने चेति क्रोमित्यंकुशमुद्रया सूर्यमंडलात्तीर्थान्यावाह्य मुद्रां प्रदर्श्य वमिति धेनुमुद्रयाऽमृतीकृत्य मत्स्यमुद्रयाच्छाद्य कवचेनावगुंठ्य, चक्रेण संरक्ष्य, अस्त्रेण छोटिकाभिर्दशदिग्बंधनं कृत्वा, आनंदभैरवमानन्दभैरवीमावाह्य पूजयेत् ॥ तन्मंत्रौ—ॐ ऐं ह्रीं श्रीं ह स क्ष म ल व र यूं आनंद भैरवाय वौषट् इत्यानंदभैरवं त्रिः संपूज्य, ॐ ऐं ह्रीं श्रीं ह स क्ष म ल व र यीं आनंदभैरव्यै वौषट् इत्यानंद भैरवीं त्रिः संपूज्य, पूर्ववद्ध्यात्वा, ततो विशेषार्घस्य चतुर्दिक्षु पंचरत्नानि पूजयेत् ॥ पूर्वेंग्लूं गगनरत्नेभ्यो नमः ॥ दक्षिणे—स्थूं स्वर्गरत्नेभ्यो नमः ॥ पश्चिमे—प्लूं पातालरत्नेभ्यो नमः ॥ उत्तरे—म्लूं मर्त्यरत्नेभ्यो नमः ॥ मध्ये न्लूं नागरत्नेभ्यो नमः ॥ इति पंचरत्नानि संपूजयेत् ॥ अथ द्रव्यशुद्धिः ॥ ततो मांसमीनमुद्राकुंडगोलादिकं शोधयेत् ॥ अथ मांसशोधनम् ॥ द्वितीयाशोधनम् ॐ यं १० पोषणं ॐ रं १० इति संदह्य ॐ वं १० इति अमृतं प्लावय धेनुमुद्रयामृतीकृत्य पशुगायत्रीं दशधा जपेत् ॥ ॐ पशुपाशाय विद्महे शिरश्छेदनाय धीमहि ॥ तन्नो मांसः प्रचोदयात् ॥ वामहस्ते द्वितीयां गृहीत्वा तत्त्वमुद्रया विलोममातृकया मूलमंत्रेण च कुंभतीर्थमापूरयेत् ॥ ॐ क्षां नमः इत्यादि अं नम इत्यंता विलोममातृकाः ॥ ॐ प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ॥ यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा ॥ अनेन मंत्रेण शोधयेत् ॥ अथ मीनशोधनम् ॥ ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् ॥ उर्वारुकमिव बंधनान्मृत्योर्मुक्षीयमामृतात् ॥ अथ मुद्राशोधनम् ॥ ॐ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ॥ दिवीव चक्षुराततम् ॥ १ ॥ ॐ तद्विप्रासो विपन्यवो जागृवांसः समिंधते ॥ विष्णोर्यत्परमं पदम् ॥ २ ॥ मांसमीनमुद्राविशेषार्घे किंचिन्निक्षिपेत् ॥ योगात्मकबिंदुं निष्कास्य अनेन मंत्रेण शोधयेत् ॥ ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिंचतु प्रजापतिर्धाता गर्भं दधातु मे ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ॥ गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ प्लूं ज्लूं ग्लूं स्वाहा अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं श्रावय २ स्वाहा ॥ इति कुंडगोलादिशुद्धिः ॥ विशेषार्घे बिंदुं निक्षिपेत् तत्र वमिति धेनुमुद्रयामृतीकृत्य मत्स्यमुद्रयाच्छाद्य कवचेनावगुंठ्य चक्रेण संरक्ष्य अस्त्रेण तालत्रयं दिग्बंधनं कृत्वा प्राणप्रतिष्ठां कुर्यात् ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं हं ळं क्षं हं सः सोहं श्रीमन्महाबटुकभैरवस्य अस्मिन्नाधारसहितविशेषार्घे अग्निसूर्यसोमकलानां प्राणा इह प्राणाः सुखं चिरं तिष्ठंतु ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं ळं क्षं हं सः ॥ सोहं इहास्मिन्कलशे जीवः सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुर्जिह्वाश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठंतु स्वाहा ॥ इति प्राणप्रतिष्ठा ॥ दृष्ट्वार्घपात्रं देवेशि ब्राह्म्याद्या देवताः सदा ॥ नृत्यंति सर्वयोगिन्यः प्रीताः सिद्धिं ददत्यपि ॥ तदुक्तं नव

रत्नेश्वरे ॥ विशेषार्घोपरि मूलं सप्तधा जपेदिति शुद्धिः ऐं क्लीं सौं ॥ ब्रह्मांडखंडसंभूतमशेषरससंभवम् ॥ आपूरितं महापात्रं पीयूषरसमावह ॥ १ ॥ अखंडैकरसानन्दकलेवरसुधात्मनि ॥ स्वच्छन्दस्फुरणा मंत्रा निधेह्यकुलरूपिणि ॥ २ ॥ क्लीं अकुलस्थामृताकारे सिद्धज्ञानकलेवरे । अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणी ॥ ३ ॥ सौंतद्रूपेणैकरस्यं कृत्वास्यैतत्स्वरूपिणी ॥ भूत्वा परामृताकारं मयि विस्फुरणं कुरु ॥ ४ ॥ अनेन मन्त्रेण अर्घ्यमामंत्र्य पूर्ववत्पंचरत्नानि संपूज्य पूर्ववत् आनंदभैरवभैरवीं ध्यात्वा पूजयेत ॥ तालत्रयं दिग्बन्धनं कृत्वावगुंठनमुद्रयावगुंठ्य धेनुमुद्रयामृतीकृत्य योनिमुद्रां प्रदर्श्य हंसो नम इति संपूज्य शंखमुद्रां प्रदर्श्य मत्स्यमुद्रया पात्रमाच्छाद्य मूलं दशधा प्रजप्य देवस्वरूपं पात्रं भावयेत् ॥ इति विशेषार्घस्थापनविधिः ॥ ततो विशेषार्घाद्वामतः सामान्यार्घवत् श्रीपात्रं १ गुरुपात्रं २ भैरवपात्रं ३ शक्तिपात्रं ४ योगिनीपात्रं ५ भोगपात्रं ६ वीरपात्रम् ७ आत्मपात्रं ८ बलिपात्रम् ९ एतानि नवपात्राणि संस्थाप्य दक्षिणभागे पाद्यमर्घ्यमाचमनीयमधुपर्का इति चत्वारि पात्राणि सामान्यार्घवत्संस्थाप्य पाद्याद्युपचारार्थमेकं वा पात्रं स्थापनीयम् । अशक्तश्चेद्गुरुवीरआत्मबलिभोगेति पचपात्राणि स्थापयेत् ॥ तत्राप्यशक्तश्चेत्तदा सामान्यार्घविशेषार्घप्रोक्षणीपात्राणि संस्थापयेत् ॥ तदुक्तं चंद्रपीठे वामे शंखं प्रतिष्ठाप्य मध्ये चार्घ्यं प्रकल्पयेत् ॥ दक्षिणे प्रोक्षणीपात्रमर्घत्रयविकल्पनेति ॥ १ ॥ ततः प्रोक्षण्युदकेन पुष्पाणि प्रोक्षयेद्यथा ॐ पुष्पकेतुराजार्हते शताय सम्यक् संवधाय ॥ ॐ पुष्पे शुद्धिं विधाय ह्रीं हूं फट् ॥ इति मंत्रेण बाणमुद्रया समदृष्टिः । पुष्पस्यावलोकनेन गंधादिसर्वसंभारशुद्धिं विधाय ॥ प्रोक्षयेत्तेन चात्मानं पूजोपकरणानि च ॥ सर्वत्र प्रोक्षणं कुर्यात्तेनशुद्धिर्भवेत्किल ॥१॥ इति पात्रासादनविधिः अथ घृततैलदीपस्थापनविधिः ॥ तत्र देवस्य दक्षभागे घृतदीपं वामे तैलदीपं संस्थापयेत् ॥ सुदर्शनमंत्रेण घृतदीपं पूजयेत्॥यथा–रां रीं रूं रैं रौं रः ॐसहस्रार हुं फट् स्वाहेति गन्धपुष्पाभ्यां संपूजयेत्।अथ तैलदीपं पाशुपतास्त्रमंत्रेण पूजयेत। यथा–ॐ श्लीं पशो हुं फट् स्वाहेति मंत्रेण गन्धपुष्पाभ्यां संपूज्य, हस्तद्वयेन दीपशिखां स्पृष्ट्वा मंत्रं पठेत् ॥ ॐ घोराय घोरतमाय महारौद्राय वीरभद्राय ज्वालामालिने सर्वप्राणोपसंहर्त्रे हुं फट् स्वाहा इति पठित्वा पश्चात्तत्तेजसात्मानं समर्प्य वाक्कायचित्तशोधनं कुर्यात् ॥ हुं फट् स्वाहा इति मुखे ॥ ॐ रक्ष रक्ष हुं फट् स्वाहेति हृदि हस्तं दत्त्वात्मरक्षां विधाय ॥ ॐ इति मंत्रेण चन्दनपुष्पाणि कराभ्यां मर्दयित्वा तानि वामहस्ते समादायाघ्राय–ते सर्वे विलयं यांतु ये मां हिंसन्ति हिंसकाः ॥ मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥१॥इति मंत्रेण ऐशान्यां दिशि दूरतः क्षिप्त्वा हस्तौ प्रक्षाल्याचामेदिति दीपपूजनस्थापनम् ॥ अथ तिरस्करणीपूजनम् ॥ ततः स्वपुरोभागे सर्वविघ्ननिवारणार्थं तिरस्करणीं ध्यायेत् ॥ यथा–नीलं हयं समधिरुह्य पुरः प्रयाति नीलांशुकाभरणमाल्यविलेपनाढ्या ॥ निद्रापुटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु भक्तान् ॥१॥ एवं ध्यात्वा गन्धपुष्पाभ्य

संपूज्य अग्रे किंचिद्बिंदुधारया संतर्प्य मंत्रद्वयं पठेत् ॥ यथा–ॐ ह्रीं श्रीं नमो भगवति माहेश्वरि सर्व पशुजनमनश्चक्षुस्तिरस्करणीं कुरु २ स्वाहा ॥ १ ॥ ॐ ह्रीं क्लीं ऐं ग्लौं तिरस्करणी सकलजनवाग्वादिनी सकलपशुजनमनश्चक्षुषीश्रोत्रजिह्वाघ्राणतिरस्करणीं कुरु २ ठः ठः ठः स्वाहा ॥ २ ॥ इति नमस्कुर्यात् ॥ अथ पंचबलिप्रदानविधिः ॥ यंत्रस्य पूर्वदक्षिणपश्चिमोत्तरेषु त्रिकोणं वृत्तं च चतुरस्रं मंडलं कृत्वा, ॐ ह्रीं मंडलाय नमः इति मंडलं संपूज्य, पूर्वे बां बटुकाय नमः इति पाद्यादिभिः पूजयेत् ॥ पक्वान्नपूर्णसलिलमीनमांसकारणचतुष्टयं दीपयुक्तं वा बलिपात्रेषु पूरयित्वा मीनमुद्रया किंचित्तीर्थं पात्रे दत्त्वा वामांगुष्ठानामाभ्यां पूर्वे उत्सृजेदनेन -ॐ एह्येहि देवीपुत्र बटुकनाथ कपिलजटाभारभासुर त्रिनेत्रज्वालामुख सर्वविघ्नान्नाशय २ सर्वोपचारसहितं बलिं गृह्ण २ स्वाहा एष बलिर्बटुकाय नमः ॥ १ ॥ दक्षिणे पूर्ववन्मंडलं संपूज्य यां योगिनीभ्यो नमः इति योगिनीरभ्यर्च्य, पूर्ववत्पात्रे द्रव्यं पूरयित्वा योनिमुद्रया तीर्थं पूरयित्वा दक्षांगुष्ठानामाभ्यां पूर्ववद्बलिं दद्यादनेन–ऊर्ध्वं ब्रह्मांडतो वा दिवि गगनतले भूतले निष्कले वा पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥ क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन प्रीत्या देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवंद्याः ॥ १ ॥ यां योगिनीभ्यः स्वाहा सर्वयोगिन्यो हुं फट् स्वाहा, एष बलिर्योगिनीभ्यो नमः ॥ २ ॥ पश्चिमे पूर्ववन्मण्डलं कृत्वा मण्डलं संपूज्य, क्षं क्षेत्रपालाय नमः इति क्षेत्रपालमभ्यर्च्य पात्रे द्रव्यं पूरयित्वा अंकुशमुद्रया तीर्थं दत्त्वा दक्षांगुष्ठमध्यमानामिकाभ्यां पूर्ववद्बलिं दद्यादनेन ॐ क्षां क्षीं क्षूं क्षैं क्षौं क्षः स्थानक्षेत्रपाल धूपदीपादिसहितं बलिं गृह्ण २ स्वाहा एष बलिः क्षेत्रपालाय नमः ॥ ३ ॥ उत्तरे पूर्ववन्मण्डलं कृत्वा मण्डलं संपूज्य, गं गणेशाय नमः इति गणेशमभ्यर्च्य पात्रेद्रव्यं पूर्ववत्पूरयित्वा, दक्षांगुष्ठतर्जन्यनामिकाभ्यां पूर्ववद्बलिं दद्यादनेन–ॐ गां गीं गूं गैं गौं गः गणपतये वरवरद सर्वजनं मे वशमानय २ बलिं गृह्ण २ एष बलिर्ग गणपतये नमः ॥ ४ ॥ अथ गणपतिसमीपे तथैव पूर्ववन्मण्डलं कृत्वा ॐ ह्रीं व्यापकमंडलाय नमः इति गन्धपुष्पाभ्यां संपूज्य साधारणबलिं संस्थाप्य, मूलेनाभिमंत्र्य तत्र धूपदीपादिभिः सर्वभूतानि संपूज्य तत्त्वमुद्रया बलिं दद्यादनेन–ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वेभ्यो भूतेभ्यो हुं स्वाहा एष बलिः सर्वभूतेभ्यो नमः ॥ ५ ॥ इति पंचबलिप्रदानविधिः ॥ अथान्तर्यागः ॥ गुरुपात्रामृतेन गुरुपादुकां पूजयेत् ॥ यथापूर्वं शिरसि त्रिकोणं कृत्वा ततो दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गंधपुष्पं गृहीत्वा, वामहस्ते अनामिकांगुष्ठाभ्यां शुद्धिखंडं गृहीत्वा ऊर्ध्वरेखायाम् ॐ ऐं ह्रीं श्रीं दिव्यौघाः श्रीपादुकां पूजयामि तर्पयामि नमः ॥ दक्षिणरेखायाम् ॐ ऐं ह्रीं श्रीं सिद्धौघाः श्रीपादुकां पू० त० नमः ॥ वामरेखायाम् ॐ ऐं ह्रीं श्रीं मानवौघाः श्रीपादुकां पू० त० नमः॥ ततो गुरुपात्रामृतेन गुरुचतुष्टयं पूजयेत् ॥ ॐ ह्रीं श्रीं ह स क्ष म ल व र यूं हसौं हंस श्रीअमु

कानन्दनाथगुरुश्रीपादुकां पू० त० इति त्रिः सकृद्वा ॥ एवं गुरुपरमगुरुपरात्परगुरुपरमेष्ठिगुरूंस्तर्पयेत् ॥ अथ भैरव पात्रामृतेन स्वहृदि देवं तर्पयेत् ॥ यथा–ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु २ बटुकाय ह्रीं उं श्रीमन्महाबटुक भैरवं सांगं सपरिवारं सवाहनं सायुधं पूजयामि तर्पयामि नमः इति ॥ ॥ अथ तत्त्वशुद्धिं कुर्याद्यथा– भोग पात्रोपरि हस्तं दत्त्वा पठेत् ॥ ॐ प्राणापानव्यानोदानसमाना मे शुध्यन्तां ज्योतिरहंविरजा विपाप्मा भूयासं स्वाहा ॥ १ ॥ ॐ प्रकृत्यहंकारवाङ्मनःश्रोत्राणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ २ ॥ ॐ त्वक्चक्षुर्जिह्वाघ्राणवचांसि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ ३ ॥ ॐ पाणिपाद पायूपस्थशब्दा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ ४ ॥ ॐ स्पर्शरूपरसगंधाकाशानि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ ५ ॥ ॐ वायुतेजस्सलिलभूम्यात्मानो मे शुध्यन्तां ज्योति रहं विरजा विपाप्मा भूयासं स्वाहा ॥ ६ ॥ इति षट् मंत्रान् पठन् भोगपात्रामृतेन दक्षकरतलं संमार्ज्य, दक्ष हस्ते त्रिकोणं लिखित्वा शुद्धिखंडानि त्रिकोणस्य दक्षोत्तरसम्मुखमध्येषु निधाय वामहस्तांगुष्ठमध्यमानामि काभिरेकं खंडं गृहीत्वा मूलान्ते हीं श्रीं आं आत्मतत्त्वेन स्थूलदेहं शोधयामि स्वाहा ॥ अनेनाधःस्थां शुद्धिं स्वीकृत्य; पूर्ववच्छुद्धिखंडं गृहीत्वा, मूलान्ते हीं श्रीं विद्यातत्त्वेन सूक्ष्मदेहं शोधयामि स्वाहा ॥ अनेन दक्षस्थां शुद्धिं स्वीकृत्य, तृतीयं खण्डं गृहीत्वा, मूलान्ते हीं श्रीं शं शिवतत्त्वेन परमकारणदेहं शोधयामि स्वाहा ॥ अने नोत्तरस्थां शुद्धिं स्वीकृत्य, चतुर्थखंडं गृहीत्वा मूलान्ते ह्रीं श्रीं सं सर्वतत्त्वेन तत्त्वत्रयाश्रयं महाकारणजीवं शोधयामि स्वाहा ॥ अनेन मध्यस्थां स्वीकृत्य, वस्त्रेण हस्तौ विशोध्य हस्ताभ्यां सर्वांगं संमार्जयेत् ॥ ततो भोगपात्रं स्वीकुर्यात् ॥ यथा–मूलान्ते ॐ अर्द्धं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योह मस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि अहमेव हि मां जुहोमि स्वाहा ॥ इत्यनेनात्मपात्रं गृह्णीयात् इति शुद्धिः ॥ अथ श्रीपात्रामृतेनात्मानं पूजोपकरणं चाभ्युक्ष्य सर्वं ब्रह्ममयं भावयेत् ॥ अथ समर्थः अधिकारी चेत्तदा चतुर्वारं पात्रग्रहणं कार्यं, तत्र मंत्राः ॥ वामहस्ते पात्रं गृहीत्वा तदुपरि दक्षहस्तमाच्छाद्य पठेत् ॥ ॐ ह्रीं श्रीं प्रकृत्यहंकारमनोबुद्धिश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगंधाकाशवायुसलि लभूम्यात्मक अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः शुद्धाशुद्धचतुर्विंशतितत्त्वसहितं प्रथमकूट मुच्चार्य आधारे अग्निचक्रे कामगिरिपीठे मित्रेशनाथात्मके जाग्रद्दशाधिष्ठायिके इच्छाशक्त्यात्मकरुद्रात्मक शक्तिश्रीकामेश्वरीदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ॥ गौरीवल्लभसहिताय श्रीगौरीवल्लभसहितात्मने विश्वपुरुषाय विश्वपुरुषात्मने आर्णवमलशोधनार्थे आधारे अग्निमंडले आत्मतत्त्वं स्थूलदेहं शोधयामि जुहोमि स्वाहा ॥ जुहोमीति गुरोराज्ञां गृहीत्वा तदा गुरुणा यस्यास्य परमामृतमिति वक्तव्यं प्रथमपात्रे न तु

सर्वत्र ॥ पुनः मुख्यकुंभात्तीर्थं द्वितीयवारं पात्रे पूरयित्वा पठेत् ॥ ॐ ह्रीं श्रीं मायाकलाविद्यारागकालनियतिपुरुषात्मकं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं शुद्धाशुद्धसप्ततत्त्वसहितं द्वितीयकूटमुच्चार्य, सूर्यचक्रे जालंधरगिरिपीठे षष्टिनाथात्मके स्वप्नदशाधिष्ठायिके ज्ञानशक्त्यात्मकविष्ण्वात्मकशक्तिश्रीवज्रेश्वरीदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ॥ श्रीलक्ष्मीनारायणसहिताय श्रीलक्ष्मीनारायणसहितात्मने कार्मिकमलशोधनार्थं हृदये सूर्यमंडले विद्यातत्त्वे सूक्ष्मदेहं शोधयामि जुहोमि स्वाहा ॥ २ ॥ पुनस्तृतीयवारं पात्रमादाय, ॐ ह्रीं श्रीं शिवशक्तिसदाशिवेश्वर शुद्धविद्यात्मक यं रं लं वं शं षं सं हं ळं क्षं शुद्धाशुद्धपंचतत्त्वसहितं तृतीयकूटमुच्चार्य सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथात्मके सुषुप्तिदशाधिष्ठायिके क्रियाशक्त्यात्मकब्रह्मात्मकशक्तिश्रीभगमालिनीदेवी श्रीपादुकां पूजयामि तर्पयामि नमः ॥ विद्याशंकरसहिताय विद्याशंकरसहितात्मने मायिकमलशोधनार्थे चंद्रमंडले शिवतत्त्वेन कारणदेहं शोधयामि जुहोमि स्वाहा ॥३॥ अथ चतुर्थवारं पात्रमादाय—ॐ ह्रीं श्रीं शिवशक्तिसदाशिवेश्वर शुद्धविद्यामायाकलाविद्यारागकालनियतिपुरुषकृत्यहंकारमुखश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगंधाकाशवायुतेजःसलिलभूम्यात्मक ॐ आदि क्षांतं क्षादि आंतं पठेत् ॥ शुद्धाशुद्धषट्त्रिंशत्तत्त्वसहितमात्मविद्याशौंडस्तथैव स्थूलसूक्ष्मकारणमहाकारणदेहं शोधयामि स्वाहा ॥ समस्तमूलमुच्चार्य, ब्रह्मरंध्रचक्रे उड्यानपीठं श्रीचर्यानन्दनाथात्मिके सूर्यदशाधिष्ठायिके ब्रह्मात्मकशक्तिश्रीमहाभैरवसहिताय श्रीमद्बटुकभैरवाय श्रीपादुकां पूजयामि तर्पयामि नमः ॥ गौरीवल्लभलक्ष्मीनारायणविद्याशंकरसहितात्मने विश्वतैजसप्राज्ञपुरुषाय विश्वतैजसपुरुषात्मने आर्णवकार्मिकमायिकमलशोधनार्थं सर्वतत्त्वेन महाकारणदेहं शोधयामि स्वाहा ॥ स्वदेहपीठमंत्रांतं संपूज्य स्वहृदये पूर्वं देवं ध्यात्वा आसनाद्युपचारैःसावरणं देवमभ्यर्च्य मनसा धूपदीपनैवेद्यादीन् दत्त्वा मानसं वैश्वदेवं कृत्वा प्राणानायम्य ऋष्यादिकषडंगन्यासान् कृत्वाष्टोत्तरसहस्रं शतं वा मूलं संपूज्य, पुनः प्राणायामादि कृत्वा जपं निवेद्य स्वशिरसि हृदये मूलाधारे पादयोः सर्वांगे च पंच पुष्पांजलीन् त्रीन् पुष्पांजलीन् वा दत्त्वा देवतायाश्चरणे आत्मानं समर्प्य बाह्यार्चनं कुर्यादिति ॥ इत्यन्तर्यागः ॥ अथ बहिर्यागः ॥ जपस्थानार्चनं स्थानं मालापुस्तकदर्शनम् । स्वभक्तेषु महेशानि दर्शनं नैव कारयेत् ॥१॥ इति वचनात्तद्यथोक्तं योगिनीतंत्रे ॥ लिङ्गस्थां पूजयेद्देवीं पुस्तकस्थां तथैव च ॥ मंडलस्थां महामायां यंत्रस्थां प्रतिमासु च ॥२॥ जलस्थां वा शिलायां वा पूजयेत्परमेश्वरीम् ॥ इति पीठनिर्णयः ॥ शक्तिगंधाष्टकेन यंत्रं लिखेत् ॥ शक्तिगंधाष्टकं यथा—स्वयंभुकुसुमं कुंडगोलोत्थं रोचनागुरु ॥ काश्मीरमृगनाभिं च साद्यं च मलयोद्भवम् ॥ ३ ॥ एष गंधः समाख्यातः सर्वदा चंडिकाप्रियः ॥ सौवर्णे राजते ताम्रे पट्टे भूर्जेऽथवा भुवि ॥ ४ ॥ यंत्रेण चेत्पूजा देवता न प्रसीदति ॥ स्वपुरः पीठे यंत्रं स्थापयेत् ॥५॥ भूप्रदेशे मनोरम्ये

पुष्पामोसुधूपिते ॥ गोमयेनाथ संलिप्ते पुष्पप्राकारशोभिते ॥ ६ ॥ मण्डपं विधिवत्तत्र आसनं तु समर्पयेत् ॥ लिखेद्यंत्रं प्रयत्नेन लेखन्या हेमतारयोः ॥ ७ ॥ अथ यंत्रोद्धारः ॥ यंत्रोद्धारमिमं देहि त्रैलोक्ये चाति दुर्लभम् ॥ तद्यंत्रं च प्रवक्ष्यामि यंत्रे देवं च पूजयेत् ॥ १ ॥ मध्ये चाष्टदलं पद्मकर्णिकाकेसरोज्ज्वलम् ॥ त्रिकोणं च ततः कृत्वा षट्कोणं च ततो न्यसेत् ॥ २ ॥ वर्तुलं चाष्टपत्रं च चतुरस्रं त्रयात्मकम् ॥ एवं यन्त्रं च संपूज्य स्वस्थो भूत्वा जपेन्नरः ॥ ३ ॥ इति यंत्रोद्धारः ॥ अथ पीठावरणदेवतान्यासः ॥ ॐ मं मंडूकाय नमः आधारे ॥ ॐ कालाग्निरुद्राय नमः स्वाधिष्ठाने ॥ ॐ कूं कूर्माय नमः नाभौ ॥ ॐ आं अधारशक्तये नमः ॥ ॐ क्षीं क्षीर सागराय० ॥ ॐ रं रत्नभूताय० ॥ ॐ रं रत्नद्वीपाय नमः ॥ ॐ कं कल्पवृक्षाय० ॥ ॐ रं रत्नवेदिकायै० हृदये ॐ धं धर्माय० दक्षांसे ॥ ॐ अं ज्ञां ज्ञानाय० वामांसे ॥ ॐ वं वैराग्याय० वामोरौ ॥ ॐ ऐं ऐश्वर्याय० दक्षोरौ ॥ ॐ अं अधर्माय० वदने ॥ ॐ अं अज्ञानाय० वामपार्श्वे ॥ ॐ अं अवैराग्याय० नाभौ ॥ ॐ अं अनैश्वर्या० दक्षपार्श्वे ॥ ॐ आं आनन्दाय० ॥ ॐ कं कंकाय० ॥ ॐ सं संविन्नालाय० ॥ ॐ सं सरोजाय० ॥ ॐ पं प्रकृतिपत्रेभ्यो० ॥ ॐ विं अकारमयकेसरेभ्यो० ॥ पंचाशद्वर्णाढ्यकर्णिकायै० ॥ ॐ अं अर्कमंडलाय द्वादशकलाभ्यो नमः ॥ ॐ चं चंद्रमंडलाय षोडशकलात्मने नमः ॥ ॐ अग्निमंडलाय द्वादशकलाभ्यो० ॥ ॐ सं सत्त्वबोधात्मने० ॥ ॐ रं रजःप्रकृतात्मने० ॥ ॐ तं तमस्तु मोहात्मने० ॥ ॐ आं आत्मने० ॥ ॐ पं परमात्मने० ॥ ॐ अं अंतरात्मने० ॥ ॐ ज्ञां ज्ञानात्मने० ॥ ॐ मां मायातत्त्वात्मने० ॥ ॐ कं कलातत्त्वात्मने०॥ॐ विं विद्यातत्त्वात्मने० ॥ ॐ पं परतत्त्वात्मने० ॥ इति पीठनवशक्तीर्न्यसेत् ॥ ॐ तं तत्पुरुषाय नमः ॥ ॐ ईं ईशाय नमः ॥ ॐ अं अघोराय० ॥ ॐ वां वामदेवाय० ॥ ॐ सं सद्यो जाताय० ॥ ॐ वां वामायै० ॥ ॐ ज्यें ज्येष्ठायै० ॥ ॐ श्रें श्रेष्ठायै० ॥ ॐ रौं रौद्रायै० ॥ ॐ कां कालायै० ॥ ॐ कं कलविकरणायै० ॥ ॐ बं बलविकरणायै० ॥ ॐ बं बलप्रमथना यै० ॥ ॐ मं मनोन्मनायै० ॥ हृदये ॥ अथा वरणदेवतान्यासः ॥ तत्र शिरसि ॐ हं हृदयदेवाय० ॥ ॐ कं कवचदेवाय० ॥ ॐ नें नेत्रदेवाय० ॥ ॐ अं अस्त्रदेवाय० इति प्रथमा वरणदेवतान्यासः ॥ अथ ललाटे ॥ ॐ डां डाकिनीपुत्रेभ्यो नमः ॥ ॐ शां शाकिनीपुत्रेभ्यो नमः ॥ ॐ लां लाकिनीपुत्रेभ्यो नमः ॥ ॐ कां काकिनीपुत्रेभ्यो नमः ॥ ॐ सां साकिनी पुत्रेभ्यो नमः ॥ ॐ हां हाकिनीपुत्रेभ्यो नमः ॥ ॐ मां मालिनीपुत्रेभ्यो० । ॐ दें देवीपुत्रेभ्यो० ॥ ॐ मां मातृपुत्रेभ्यो० ॥ ॐ रुं रुद्रपुत्रेभ्यो० ॥ ॐ मां मातृपुत्रेभ्यो० (?)॥ ॐ ऊं ऊर्ध्वमुखपुत्रेभ्यो० ॥ ॐ अं अधोमुखपुत्रेभ्यो नमः० ॥ इति द्वितीयावरणदेवतान्यासः ॥ अथ कंठे । ॐ ब्रं ब्रह्माणीपुत्रबटुकाय नमः ॥ ॐ मां माहेश्वरीपुत्रबटुकाय नमः ॥ ॐ कौं कौमारीपुत्रबटुकाय नमः ॥ ॐ वैं वैष्णवीपुत्रबटुकाय नमः ॥ पूर्वेशानयोर्मध्ये ब्रह्माणी, निर्ऋतिवरुणयोर्मध्ये वैष्णवी




॥ॐ इं इंद्राणीपुत्रबटुकाय नमः॥ ॐ मं महालक्ष्मी पुत्रबटुकाय नमः॥ ॐ वां वाराहीपुत्रबटुकाय० ॥ ॐ चां चामुंडापुत्रबटुकाय नमः ॥ इति तृतीयावरण देवतान्यासः ॥ अथ हृदये ॥ ॐ हें हेतुकाय०॥ ॐ त्रि त्रिपुरान्तकाय नमः ॥ ॐ वें वेतालाय नमः ॥ ॐ अं अग्निजिह्वाय नमः ॥ ॐ कां कालांतकाय नमः ॥ ॐ कं करालाय नमः ॥ ॐ एं एयालाय नमः ॥ ॐ त्रीं त्रीमाय नमः ॥ ॐ अं अचलाय नमः॥ ॐ हां हाटकेशाय०॥इति चतुर्थावरणदेवतान्यासः॥ अथ नाभौ॥ॐश्रीं श्रीकंठाय नमः॥ॐ अं अनंतेशाय० ॐ सू सूक्ष्मेशाय० ॥ ॐ अं अमीशाय० ॥ ॐ भां भारभूतीशाय०॥ ॐ अं अतिथीशाय० ॥ ॐ स्थां स्थाण्वीशाय०॥ॐहं हरेशाय०॥ॐझिं झिंटीशाय०॥ ॐ भौं भौतिकेशाय० ॥ ॐ सं सद्योजातेशाय०॥ॐ अं अनुगृहेशाय०॥ॐक्रूं क्रूरेशाय०॥ॐ मं महासेनेशाय नमः ॥ इति पंचमावरणदेवतान्यासः ॥ अथ स्वाधिष्ठाने॥ॐक्रों क्रोधीशाय नमः ॥ॐ चं चंडीशाय०॥ॐपं पंचांतकेशाय०॥ॐशिं शिवोत्तमेशाय०॥ॐएं एकरुद्रेशाय० ॥ ॐ कूं कूर्मेशाय० ॥ ॐ एं एकनेत्रेशाय० ॥ ॐ चं चतुराननेशाय० ॥ ॐ अं अजेशाय०॥ॐसं सर्वेशाय०॥ॐसों सोमेशाय०॥ॐलां लांगलीशाय०॥ ॐदां दारुकेशाय०॥ ॐ अं अर्धनारीशाय० ॥ ॐ उ उमाकांतेशाय०॥ॐ आं आषाढीशाय०॥इति षष्ठावरणदेवतान्यासः॥ अथ मूलाधारे॥ॐ दं दंडीशाय० ॥ ॐअं अत्रीशाय०॥ॐमं मीनेशाय०॥ॐ मं मेषेशाय०॥ॐलोंलोहितेशाय नमः ॥ ॐ शिं शिखीशाय०॥ ॐ छं छगलंडेशाय०॥ॐ द्विं द्विरंडेशाय०॥ ॐ मां महाकालीशाय० ॥ ॐ बां बालीशाय०॥ॐभुं भुजंगेशाय०॥ ॐ पिं पिनाकीशाय० ॥ ॐ खं खड्गीशाय० ॥ ॐ बं बकीशाय०॥ॐ श्वें श्वेतेशाय० ॥ ॐ भृं भृगवीशाय० ॥ देवस्य वामे-ॐ नं नकुलीशाय० ॥ ॐशिं शिवेशाय० ॥ ॐ सं संवर्त्तकेशाय० ॥ ॐ दिं दिव्ययोगिन्यै० ॥ ॐ अं अंतरिक्षयोगिन्यै० ॥ ॐ भूं भूमिष्ठयोगिन्यै०॥ॐ सं संवर्त्तयोगिन्यै नमः॥इति सप्तमावरणदेवतान्यासः॥अथ पादयोः ॥

ॐ वं वज्रसहितेंद्राय नमः ॥ ॐ शं शक्तिसहिताग्नये नमः ॥ॐ दं दंडसहितयमाय नमः ॥ ॐ खं खड्गसहित निर्ऋतये नमः ॥ॐपां पाशसहित वं वरुणाय नमः ॥ ॐ अं अंकुशसहित वां वायवे नमः ॥ ॐ गं गदासहित सं सोमाय० ॥ ॐ त्रिं त्रिशूलसहित ईं ईशानाय० ॥ ॐ कं कमलासहित ब्रं ब्रह्मणे नमः ॥ ॥ ॐ चं चक्रसहिता नन्ताय नमः इत्यष्टमावरणदेवतान्यासः॥ अथ पीठपूजा ॥ ॐ ह्रीं आधारासनाय नमः॥ ॐ मंडूकाय नमः ॥ ॐ कालाग्निरुद्राय० ॥ ॐ कूर्माय० ॥ॐ अनन्ताय० ॥ ॐ पृथिव्यै० ॥ॐ सुधांबुधये० ॥ ॐ रक्तद्वीपाय० ॥ ॐ मणिमंडपाय०॥ॐकल्पवृक्षाय०॥ ॐ रत्नवेदिकायै० ॥ ॐधर्माय०॥ ॐ ज्ञानाय०॥ॐवैराग्याय नमः ॥ ॐ ऐश्वर्याय० ॥ ॐ आनंदकंदाय नमः॥ॐसंविन्नालाय०॥ॐ सर्वतत्त्वाय०॥ ॐ पद्माय०॥ ॐ प्रकृतिमयपत्राय०॥ ॐ विकृतिमयकेशरेभ्यो० ॥ पंचाशद्वर्णबीजाढ्यकर्णिकायै० ॥ ॐ अं अर्कमंडलाय० ॥ ॐ सोममंडलाय० ॥ ॐ वह्निमंडलाय० ॐ सं सत्त्वाय० ॥ ॐ रं रजसे० ॥ ॐ तं तमसे० ॥ॐ आं आत्मने०॥ॐपं परमात्मने० ॥ ॐ ह्रीं ज्ञानात्मने०॥ ॐ मां मायातत्त्वाय० ॥ॐ विं विद्यातत्त्वाय०॥ॐ शिं शिवतत्त्वा०॥ ॐ पं परतत्त्वाय० ॥ ॐ मायायै० ॥ ॐ ज्येष्ठायै० ॥ ॐ रौद्र्यै० ॥ ॐ काल्यै० ॥ ॐ कलविकरण्यै० ॥ ॐ बलविकरण्यै० ॥ ॐ बलप्रमथिन्यै० ॥ ॐ सर्वभूतदमन्यै० ॥ मध्ये ॐमनोन्मन्यै०॥ ॐ नमो भगवतेसकलगुणात्मशक्तियुक्तायानन्त योगपीठात्मने नमः ॥ एवं गन्धपुष्पाभ्यां पीठं संपूजयेत्॥ अथ स्वहृदयस्थं देवं यंत्रे स्थापयेत्तद्यथा–यंत्रस्थासनो परि मूलेन मूर्तिं विचिन्त्य, आत्मानं कामकलारूपं विभाव्य, कूर्ममुद्रया पुष्पं गृहीत्वा वामनासापुटे वायुबीजेन मूलाधारात्कुंडलिनीं ब्रह्मरन्ध्रांतं नीत्वा हृदये समानीय मूले मूर्त्तिं कल्पयेत् ॥ कुंडलिनीमूर्त्तिसंयोगं विभाव्य तन्मूर्तिं दक्षनासया पुष्पमारोप्य तत्पुष्पं चक्रे निधापयेत् ॥ तदुक्तं कुमारीकल्पे ॥ ततो हृदयपद्मान्ते स्फुरन्तीं विद्युदाकृतिम् ॥ सुषुम्णावर्त्मना नीत्वा शिवस्थाने महेश्वरी ॥ ततो वै हृदयासन्ने पुष्पांतरे समुन्नयेत् ॥१॥ यंत्र मध्ये आवाहयेदनेन–देवेश भक्तिसुलभ परिवारसमन्वित ॥ यावत्त्वां पूजयिष्यामि तावदेव इहावह ॥ १ ॥ ॐ सद्योजातमिति आवाहनादिमुद्रां प्रदर्श्यावाहयेत् ॥ इहागच्छ २ इति आवाहनी भवेति आवाह्य वामदेवा येति मंत्रेण मूलेन स्थापनीमुद्रया स्थापना भवेति संस्थाप्य, सन्निधापनमुद्रया इह सन्निधेहीति सन्निधानीभवेति सन्निधाप्य, सन्निरोधनमुद्रया इह सन्निरुद्ध२ इति सन्निरोधिनी भवेति सन्निरोध्य, संमुखीकरणमुद्रया संमुखीभव २ इति संमुखीकृत्य, षडंगेन संकलीकृत्य हुमित्यवगुंठ्य छोटिकाभिर्दशदिग्बंधनं कृत्वा, वमिति धेनुमुद्रयाऽमृती कृत्य महामुद्रया परमीकृत्य लेलिहामुद्रया जीवन्यासं विधाय खड्गमुंडवराभययोनिमुद्रां प्रदर्शयेत् ॥ स्वागतं कुशलमिदमासनमास्यताम् इत्यभिलाप्य, यंत्रे प्राणप्रतिष्ठां कुर्यात् ॥ ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सःसोहं बटुकभैरवाय सपीठयंत्रसहिताय सपरिवाराय प्राणा इह प्राणाः सुखं चिरं तिष्ठन्तु स्वाहा ॥ पुनः १४

सर्वेन्द्रियाणि स्थितानि०॥पुनः १४ जीव इह स्थितःसुखं चि०॥ पुनः १४ वाङ्मनस्त्वक्चक्षु श्रोत्रजिह्वाघ्राणानि सुखं चिरं तिष्ठन्तु स्वाहा, यः प्राणतो निमिषतो महित्वे विधम इति मंत्रं त्रिवारं पठेत् ॥ मनोजूतिर्जुषतां सुप्रतिष्ठा प्रतिष्ठा ॥ इति प्राणप्रतिष्ठा ॥ अथ ध्यानम् ॥ शुद्धस्फटिकसंकाशं सहस्रादित्यवर्चसम् ॥ नीलजीमूतसंकाशं नीलांजनसमप्रभम् ॥ १ ॥ अष्टबाहुं त्रिनयनं चतुर्बाहुं द्विबाहुकम् ॥ दंष्ट्राकरालवदनं नूपुरारावसंकुलम् ॥२॥ भुजंगमेखलं देवमग्निवर्णशिरोरुहम् ॥ दिगम्बरं कुमारेशं बटुकाख्यं महाबलम् ॥ ३ ॥ खट्वांगमसिपाशं च शूलं दक्षिणभागतः ॥ डमरुं च कपालं च वरदं भुजगं तथा ॥ ४ ॥ अग्निवर्णसमोपेतं सारमेयसमन्वितम्॥ध्यात्वा जपेत्सुसंहृष्टः सर्वान्कामानवाप्नुयात्॥५॥ अथ सात्विकम्–वंदे बालमिति ॥६॥ अथ राजसम्–उद्यद्भास्करसन्निभमिति ॥ ७ ॥ अथ तामसम्–ध्यायेन्नीलाद्रिकान्तमिति ॥ ८ ॥ इति यथाकामनया ध्यात्वा ॥ ॐ ह्रीं बटुकाय आपदुद्धरणं कुरु २ बटुकाय ह्रीं ॐ श्रीमद्बटुकभैरवाय नमः एवं सर्वत्र आवाहनं स० ॥ मूलेनासनं स० ॥ मूलेन सामान्यार्घोदकेन पादयोः पाद्यं स० ॥ मू० विशेषार्घं स०॥ मू० एष मधुपर्को नम इति मुखे दत्त्वा, ततो मू० आचमनं स० ॥ मू० शंखोदकेन स्नानं स०॥पयःपृथिव्यामिति–मू०पयःस्नानं स० ॥ दधि क्रा० मू० दधिस्नानं स० ॥ घृतं० घृतस्नानं स० ॥ मधुवाता०मू० मधुस्नानं स० ॥ अपांरस० मू० शर्करास्नानं स० ॥ शुद्धवालः०मू० सांबुकलशाच्छुद्धोदकस्नानं स० ॥ मू० गंगादितीर्थोदकेन स्नानं स० ॥ ततः संक्षेपतः गंधपुष्पधूपदीपनैवेद्यादि दत्त्वा, निर्माल्यं विसृज्य अच्छिन्नधारया पुरुषसूक्तेन रुद्रसूक्तेन वा अभिषेकं कुर्यात् ॥ मू०युवासु० वस्त्रं० स० ॥ मू० आभूषणं स० ॥ यज्ञोपवी० मू०यज्ञोपवीतं स०॥ गंधद्वाराम् मू०गंधं स०॥ अक्षन्नमी०मू० अक्षतान् स० ॥ यत्पुरुषेति मू० पुष्पं स० ॥ एवं पुष्पान्ते पूजयित्वा तत आवरणपूजां कृत्वा, धूपादीपादिपूजां कुर्यात् ॥ अथावरणपूजा ॥ पुष्पांजलिं समादाय। संविन्मय परोदेव परामृतरसप्रिय ॥ अनुज्ञां देहि बटुक परिवारार्चनाय मे ॥ १ ॥ इत्युक्त्वा पुष्पांजलिं भैरवोपरि दत्त्वा आज्ञां गृहीत्वा भैरवमेव परिवाररूपेण परिणतं ध्यात्वा, परिवारदेवतां ध्यायेत् ॥ अत्र सर्वत्र पूज्यपूजकयोरंतरालं प्राची तदनुसारेण अन्या दिशः प्रकल्प्य पूजयेत्॥ततो दक्षहस्ते तर्जन्यंगुष्ठाभ्यां गन्धाक्षतपुष्पाणि गृहीत्वा वामहस्ते अनामिकांगुष्ठाभ्यां शुद्धमीनखण्डं गृहीत्वा मध्ये त्रिकोणे देवस्याग्रे ॐ ह्रः बः ईशानाय अंगुष्ठाभ्यां अंगुष्ठश्रीपादुकां पूजयामि तर्पयामि नमः ॐ ह्रौं बौं तत्पुरुषाय तर्जनी० तर्जनीश्रीपादुकां पू० त० ॥ ॐ ह्रैं बैं अघोराय मध्यमा० मध्यमाश्रीपादुकां पू० त० ॥ ॐ ह्रूं बूं वामदेवाय अनामिका० अनामिकाश्रीपादुकां पू० त० ॥ ॐ ह्रीं बीं सद्योजाताय कनिष्ठिका० कनिष्ठाश्रीपादुकां पू० त० ॥ ॐ ह्रां बां पंचवक्त्राय महादेवाय करतलकरपृष्ठाभ्यां करतलकरपृष्ठश्रीपादुकां पू० त० ॐ ह्रौं बौं ईशानाय शिरसे स्वाहा शिरसि श्रीपादुकां पू० त० ॥ ॐ ह्रैं बैं तत्पुरुषाय ऊर्ध्ववक्त्राय मुखाय मुख

 

श्रीपादुकां पू० त० ॥ ह्रूं बूं अघोराय दक्षिणवक्त्राय दक्षिणकर्णे दक्षिणकर्णश्रीपादुकां पू० त० ॥ ॐ ह्रीं बीं वामदेवाय उत्तरवक्त्राय वामकर्णे वामकर्णश्रीपादुकां पू० त०॥ ह्रां बां सद्योजाताय पश्चिमवक्त्राय चूडाधः चूडाधः श्रीपादुकां पू०त०॥अथ देवस्यांगे॥एवं षडंगम्॥ॐह्रां बां हृदयाय० हृदयश्रीपादुकां पू० त० ॥ ॐ ह्रीं बीं शिरसे स्वाहा शिरःश्रीपादुकां पू० त०॥ ॐ हं बूं शिखायै वषट् शिखाश्रीपादुकां पू० त० ॥ॐ ह्रैं बैं कवचाय हुं कवचश्रीपादुकां पू० त० ॥ ॐ ह्रौं बौं नेत्रत्रयाय वौषट् नेत्रत्रयश्रीपादुकां पू० त०॥ॐह्रः बः अस्त्रायफट् अस्त्रश्रीपादुकां पू० त०॥ॐ ह्रः बः पाताले पातालश्रीपादुकां पू० त०॥ॐ ह्रौं बौं ऊर्ध्वे ऊर्ध्वश्रीपादुकां पू० त०॥ ॐ ह्रैं बैं पूर्वे पूर्वश्रीपादुकां पू० त० ॥ ॐ ह्रूं बूं दक्षिणे दक्षिणश्रीपादुकां पू० त० ॥ ॐ ह्रीं बीं पश्चिमे पश्चिमश्रीपादुकां पू० त० ॥ ॐ ह्रां बां उत्तरे उत्तरश्रीपादुकां पू० त० ॥ ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु २ बटुकाय ह्रीं ॐ बटुकाय श्रीबटुकश्रीपादुकां पू० त० ॥ ॐ पुष्पांजलिमादाय मूलमुच्चार्य, अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ १ ॥ इति पुष्पांजलिं दत्त्वा विशेषार्घाद्बिंदुं निक्षिप्य पूजितास्तर्पिताः संतु ॥ ततः स्तंभन १ चतुरस्र २ मत्स्य ३ गोक्षुर ४ योनिमुद्रेति पंचमुद्राः प्रदर्श्य नमस्कुर्यात् ॥ इति प्रथमावरणम् ॥ १ ॥ अथ द्वितीयावरणम् ॥ कर्णिकाद्बहिः ॥ अष्टदले पूर्वादिक्रमेण ॥ ॐ ह्रीं असितांगभैरवाय असितांगभैरवश्रीपादुकां पू० त० ॥ ॐ ह्रीं इं रुरुभैरवाय रुरुभैरवश्रीपादुकां पू० त० ॥ ॐ ह्रीं ऊं चंडभैरवाय चंडभैरवश्रीपादुकां पू० त० ॥ ॐ ह्रीं ऋं क्रोधभैरवाय क्रोधभैरवश्रीपादुकां पू० त० ॥ ॐ ह्रीं लं उन्मत्तभैरवाय उन्मत्तभैरवश्रीपादुकां पू० त०॥ ॐ ह्रीं एं कपालभैरवाय कपालभैरवश्रीपादुकां पू० त० ॥ ॐ ह्रीं ओं भीषणभैरवाय भीषणभैरवश्रीपा० पू० त० ॥ ॐ ह्रीं अं संहारभैरवाय संहारभैरवश्रीपा० पू० त० ॥ त्रिकोणकोणेषु सत्त्वरजस्तमांसि प्रादक्षिण्येन केचित्पूजयंति ॥ पुनः मूलेन पुष्पांजलिं गृहीत्वा ॥ अभीष्ट० ॥ १ ॥ इत्युक्त्वा पुष्पांजलिं दत्त्वा विशेषार्घबिंदुं भैरवोपरि दत्त्वा पूजितास्तर्पिताः संतु ॥ पूर्ववन्मुद्राः प्रदर्शयेदिति द्वितीयावरणम् ॥ अथ तृतीयावरणम् ॥ त्रिकोणाद्बहिः षट्कोणे ॥ ह्रीं भूतनाथाय नमः इति सर्वत्र भूतनाथश्रीपा० पू० त० ॥ ॐ ह्रीं आदिनाथाय आदिनाथश्रीपा० पू० त० ॥ ॐ ह्रीं आनंदनाथाय आनंदनाथश्रीपा० पू० त० ॥ ॐ ह्रीं सिद्धशाबरनाथाय सिद्धशाबरनाथश्रीपा० पू० त० ॥ ॐ सहजानन्दनाथाय सहजानन्दनाथश्रीपा०पू०त०॥ ॐ ह्रीं निःसीमानन्दनाथाय निःसीमानंदनाथश्रीपा० पू० त० ॥ अथवा षट्कोणे आग्नेयादिक्रमेण ॥ ॐ ह्रां बां० हृदयाय नमः ॥ ॐ ह्रीं बीं शिरसे स्वाहा ॥ ॐ ह्रूं बूं शिखायै वषट् नमः ॥ ॐ ह्रैं बैं कवचाय हुं नमः ॐ ह्रौं बौं नेत्रत्रयाय वौषट् नमः ॥ ॐ ह्रः बः अस्त्राय फट् नमः ॥ इति प्रकारांतरं शारदोक्तम् ॥ पुनः पूर्ववन्मूलेन पुष्पांजलिमादाय-अभिष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या

समर्पये तुभ्यं तृतीयावरणार्चनम् ॥ १ ॥ इत्युक्त्वा पुष्पांजलिं दत्त्वा विशेषार्घबिंदुं भैरवोपरि दत्त्वा पूजितास्तर्पिताः संतु इत्युक्त्वा स्तंभनादिपंचमुद्राः प्रदर्शयेदिति तृतीयावरणम् ॥३॥ अथ चतुर्थावरणम् ॥ वर्त्तुले पूर्वादिक्रमेण ॥ ॐ ह्रीं डाकिनीपुत्रेभ्यो नमः डाकिनीपुत्रश्रीपा० पू० त० ॥ ह्रीं राकिनीपुत्रेभ्यो नमः राकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं लाकिनीपुत्रेभ्यो० लाकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं काकिनीपुत्रेभ्यो नमः काकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं शाकिनीपुत्रेभ्यो० नमः शाकिनीपुत्रश्रीपा० पू० त० ॥ ॐ हीं हाकिनीपुत्रेभ्यो नमः हाकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं याकिनीपुत्रेभ्यो नमः याकिनीपुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं देवीपुत्रेभ्यो नमः देवीपुत्रश्रीपा०पू०त०॥ इत्यष्टदिक्षु संपूज्य ततो देवस्य दक्षभागे ॥ ॐह्रीं उमापुत्रेभ्यो नमः उमापुत्रश्रीपा० पू० त० ॥ ॐ ह्रीं रुद्रपुत्रेभ्यो नमः रुद्रपुत्रश्रीपा० पू० त० ॥ ॐ ह्री मातृपुत्रेभ्यो नमः मातृपुत्रश्रीपा० पू० त० ॥ ततः पूर्वेशानयोर्मध्ये ॥ ॐ ह्रीं ऊर्ध्वमुखीपुत्रेभ्यो नमः ऊर्ध्वमुखीपुत्रश्रीपा० पू त० ॥ पश्चिमनैर्ऋतयोर्मध्ये ॥ ॐ ह्रीं अधोमुखीपुत्रेभ्यो नमः अधोमुखीपुत्रश्रीपा० पू० त० ॥ पुनर्मूलेन पुष्पांजलिं गृहीत्वा–अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पयेत् तुभ्यं चतुर्थावरणार्चनम् ॥ १ ॥ इत्युक्त्वा पुष्पांजलिं दत्त्वा विशेषार्घबिंदुं भैरवोपरि दत्त्वा पूजितास्तर्पिताः संतु इत्युक्त्वा पूर्ववत्पंच मुद्राः प्रदर्शयेदिति चतुर्थावरणम् ॥ ४ ॥ अथ पंचमावरणम् ॥ वर्त्तुलाद्बहिः अष्टदलाग्रे पूर्वादि अग्न्यंतं क्रमेण ॥ पूर्वे–ॐ ह्रीं ब्रह्माणीपुत्रबटुकाय नमः बटुकश्रीपा० पू त० ॥ ईशान्ये–ॐ ह्रीं माहेश्वरीपुत्रबटुकाय नमः बटुकश्रीपा० पू० त० ॥ उत्तरे–ॐ ह्रीं वैष्णवीपुत्रबटुकाय० बटुकश्री० पू० त० ॥ वायव्ये ॐ ह्रीं कौमारीपुत्रबटुकाय० बटुकश्रीपा० पू० त० ॥ पश्चिमे–इंद्राणीपुत्रबटुकाय नमः बटुकश्रीपा० पू० त० ॥ नैर्ऋत्ये–ॐ ह्रीं महालक्ष्मीपुत्रबटुकाय० बटुकश्रीपा० पू० त० ॥ दक्षिणे–ॐ ह्रीं वाराहीपुत्रबटुकाय० बटुकश्रीपा० पू०त०॥ आग्नेये–ॐ ह्रीं चामुंडापुत्रबटुकाय०बटुकश्रीपा० पू०त०॥ पुनर्मूलेनपुष्पांजलिं गृहीत्वा–अभीष्ट० ॥१॥ इत्युक्त्वा पुष्पांजलिं दत्त्वा विशेषार्घबिंदुं भैरवोपरि दत्त्वा पूजितास्तर्पिताः संतु इत्युक्त्वा पूर्ववन्मुद्राः प्रदर्शयेदिति पंचमावरणम् ॥ ५ ॥ अथ षष्ठावरणम् ॥ अष्टदलाद्बहिः चतुरस्राभ्यंतरे पूर्वादिप्राग्दक्षिणेन दशदिक्षु हेतुकादीन् दशबटुकान् यजेत् । तथाहि–ॐ हेतुकाय नमः हेतुकश्रीपा० पू० त० ॥ ॐ ह्रीं त्रिपुरांतकाय० त्रिपुरांतकश्रीपा० पू० त० ॥ ॐ हीं वेतालाय० वेतालश्रीपा०पू०त० ॥ ॐ ह्रीं अग्निजिह्वाय० अग्निजिह्वश्रीपा० पू०त० ॥ ॐ ह्रीं कालांतकाय० कालांतकश्रीपा० पू० त० ॥ ॐ ह्रीं करालाय० करालश्रीपा०पू०त०॥ ॐ ह्रीं एकपादाय० एकपादश्रीपा० पू० त० ॥ ॐ ह्रीं भीमरूपाय० भीमरूपश्रीपा० पू० त०॥इंद्रेशानयोर्मध्ये ॐ ह्रीं अचलाय० अचलश्रीपा ० पू० त० ॥ नैर्ऋतिवारुणयोर्मध्ये ॐ ह्रीं हाटकेशाय० हाटकेशश्रीपा० पू० त० ॥१०॥ पुष्पांजलिमादाय

मूलमुच्चार्य–अभीष्ट० ॥ १ ॥ विशेषार्घ्यबिंदुं भैरवोपरि दद्यात् पूजितास्तर्पिताः संतु ॥ पूर्ववन्मुद्रां प्रदर्शयेदिति षष्ठावरणम् ॥ ६ ॥ अथ सप्तमावरणम् ॥ तत्र त्रिरेखात्मकभूपुरस्य प्रथमरेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु श्रीकंठादिमहासेनांतान्यजेत् ॥ तत्र दिक्षु ॥ पूर्वे ॐ ह्रीं अं श्रीकंठेशपूर्णोदरीभ्यां नमः श्रीकंठेशपूर्णोदरीश्रीपा० पू० त० ॥ १ ॥ दक्षिणे ॐ ह्रीं आं अनंतेशविरजाभ्यां नमः अनंतेशविरजाश्रीपा० पू० त० ॥ २ ॥ पश्चिमे ॐ ह्रीं इं सूक्ष्मेशशाल्मलीभ्यां नमः सूक्ष्मेशशाल्मलीश्रीपा० पू० त० ॥ ३ ॥ उत्तरे ॐ ह्रीं ईं त्रिमूर्तीशलोलाक्षीभ्यां नमः त्रिमूर्तीशलोलाक्षीश्रीपा० पू० त० ॥ ४ ॥ आग्नेय्याम् ॐ ह्रीं उं अमरेशवर्तुलाक्षीभ्यां नमः अमरेशवर्तुलाक्षीश्रीपा० पू० त० ॥ ५ ॥ निर्ऋते ॐ ह्रीं ऊं अर्धीशदीर्घघोणाभ्यां नमः अर्धीशदीर्घघोणाश्रीपा० पू० त० ॥ ६ ॥ वायव्ये ॐ ह्रीं ऋं भारभूतीशदीर्घमुखीभ्यां नमः भारभूतीशदीर्घमुखीश्रीपा० पू० त० ॥ ७ ॥ ईशान्ये ॐ ह्रीं ॠं अतिथीशगोमुखीभ्यां नमः अतिथीशगोमुखीश्रीपा० पू० त० ॥ ८ ॥ पूर्वाग्निमध्ये ॐ ह्रीं लृं स्थाण्वीशदीर्घजिह्वाभ्यां नमः स्थाण्वीशदीर्घजिह्वाश्रीपा० पू० त० ॥ ९ ॥ दक्षिणनैर्ऋतमध्ये ॐ ह्रीं ॡं हरेशकुण्डोदरीभ्यां नमः हरेशकुण्डोदरीश्रीपा० पू० त० ॥ १० ॥ पश्चिमवायुमध्ये ॐ ह्रीं एं झिंटीशोर्ध्वकेशीभ्यां नमः झिंटीशोर्ध्वकेशीश्रीपा० पू० त० ॥ ११ ॥ उत्तरेशानमध्ये ॐ ह्रीं ऐं भौतिकेशविकृतमुखीभ्यां नमः भौतिकेशविकृतमुखीश्रीपा० पू० त० ॥ १२ ॥ अग्निदक्षिणमध्ये ॐ ह्रीं ओं सद्योजातेशज्वालामुखीभ्यां नमः सद्योजातेशज्वालामुखीश्रीपा० पू० त० ॥ १३ ॥ निर्ऋतिवरुणयोर्मध्ये ॐ ह्रीं औं अनुग्रहेशोल्कामुखीभ्यां नमः अनुग्रहेशोल्कामुखीश्रीपा० पू० त० ॥ १४ ॥ वायुसोममध्ये ॐ ह्रीं अं अक्रूरेशश्रीमुखीभ्यां नमः अक्रूरेशश्रीमुखीश्रीपा० पू० त० ॥ १५ ॥ ईशानपूर्वमध्ये ॐ ह्रीं अः महासेनेशविद्यामुखीभ्यां नमः महासेनेशविद्यामुखीश्रीपा० पू० त० ॥ १६ ॥ पुष्पांजलिमादाय मूलमुच्चार्य, अभीष्टसिद्धिं मे० ॥ १ ॥ विशेषार्घबिंदुं भैरवोपरि दद्यात् ॥ पूजितास्तर्पिताः संतु इत्युक्त्वा पूर्ववन्मुद्राः प्रदर्शयेदिति सप्तमावरणम् ॥ ७ ॥ अथाष्टमावरणम् ॥ भूपुरस्य द्वितीयरेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु क्रोधीश्वराद्यषोडशांतान्पूजयेत् ॥ तत्र पूर्वे ॐ ह्रीं कं क्रोधीशमहाकालीभ्यां नमः क्रोधीशमहाकालीश्रीपा० पू० त० ॥ १ ॥ दक्षिणे ॐ ह्रीं खं चंडीशसरस्वतीभ्यां नमः चंडीशसरस्वतीश्रीपा० पू० त० ॥ २ ॥ पश्चिमे ॐ ह्रीं गं पंचांतकेशसर्वसिद्धिगौरीभ्यां नमः पञ्चांतकेशसर्वसिद्धिगौरीश्रीपा० पू० त० ॥ ३ ॥ उत्तरे ॐ ह्रीं घं शिवोत्तमेशत्रैलोक्यविजयाभ्यां नमः शिवोत्तमेशत्रैलोक्यविजयाश्रीपा० पू० त० ॥ ४ ॥ आग्नेय्याम् ॐ ह्रीं ङं एकरुद्रेशमंत्रशक्तिभ्यां नमः एकरुद्रेशमंत्रशक्तिश्रीपा० पू० त० ॥ ५ ॥ नैर्ऋत्ये ॐ ह्रीं चं कूर्मेशात्मकशक्तिभ्यां नमः कूर्मेशात्मकशक्तिश्रीपा० पू० त० ॥ ६ ॥ वायव्ये ॐ ह्रीं छं एकनेत्रेशभूमातृकाभ्यां नमः एकनेत्रेशभूतमातृका

श्रीपा० पू० त० ॥ ७ ॥ ईशान्ये ॐ ह्रीं जं चतुराननेशलंबोदरीभ्यां नमः चतुराननेशलंबोदरीश्रीपा० पू० त० ॥ ८ ॥ पूर्वाग्निमध्ये ॐ ह्रीं झं अजेशद्राविणीभ्यां नमः अजेशद्राविणीश्रीपा० पू० त० ॥ ९ ॥ दक्षिणनैर्ऋत मध्ये ॐ ह्रीं ञं सर्वेशनागरीभ्यां नमः सर्वेशनागरीश्रीपा० पू० त० ॥ १० ॥ पश्चिमवायुमध्ये ॐ ह्रीं टं सोमेश खेचरीभ्यां नमः सोमेशखेचरीश्रीपा० पू० त० ॥ ११ ॥ उत्तरेशानमध्ये ॐ ह्रीं ठं लांगलीशमंजरीभ्यां नमः लांगलीशमंजरीश्रीपा० पू० त० ॥ १२ ॥ अग्नियाम्यमध्ये ॐ ह्रीं डं दारुकेशरूपिणीभ्यां नमः दारुकेशरूपिणी श्रीपा० पू० त० ॥ १३ ॥ नैर्ऋतपश्चिममध्ये ॐ ह्रीं ढं अर्धनारीशवीरणीभ्यां नमः अर्द्धनारीशवीरणीश्रीपा० पू० त० ॥ १४ ॥ वायुसोममध्ये ॐ ह्रीं णं उमाकांतेशकाकोदरीभ्यां नमः उमाकांतेशकाकोदरीश्रीपा० पू० त० ॥१५॥ ईशानपूर्वमध्ये ॐ ह्रीं तं आषाढेशपूतनाभ्यां नमः आषाढेशपूतनाश्रीपा० पू०त० ॥१६॥ पुष्पांजलिमादाय, मूलमुच्चार्य–अभीष्टसिद्धिं मे० ॥१॥ विशेषार्घबिंदुं भैरवोपरि दद्यात् । पूजितास्तर्पिताः संतु इत्युक्त्वा पूर्ववन्मुद्राः प्रदर्शयेदिति अष्टमावरणम् ॥ ८ ॥ अथ नवमावरणम् ॥ भूपुरस्य तृतीयरेखायां दिग्विदिगंतरालेषु षोडशस्थानेषु दंडीश्वरादिभृग्वीशांतान्पूजयेत् ॥ तत्र पूर्वे ॐ ह्रीं थं दंडीशभद्रकालीभ्यां नमः दंडीशभद्रकाली श्रीपा० पू० त० ॥ १ ॥ दक्षिणे ॐ ह्रीं दं अत्रीशयोगिनीभ्यां नमः अत्रीशयोगिनीश्रीपा० पू० त० ॥ २ ॥ पश्चिमे ॐ ह्रीं धं मीनेशशंखिनीभ्यां नमः मीनेशशंखिनीश्रीपा० पू० त० ॥ ३ ॥ उत्तरे ॐ ह्रीं मं मेषेशगार्जिनीभ्यां नमः मेषेशगार्जिनीश्रीपा० पू० त० ॥ ४ ॥ आग्नेय्याम् ॐ ह्रीं पं लोहितेशकालरात्रीभ्यां नमः लोहितेशकालरात्रिश्रीपा० पू० त० ॥ ५ ॥ नैर्ऋत्ये ॐ ह्रीं फं शिखीशकुब्जिकाभ्यां नमः शिखीशकुब्जिकाश्रीपा० पू० त० ॥ ६ ॥ वायव्ये ॐ ह्रीं वं छागलेशकपर्दिनीभ्यां नमः छागलेशकपर्दिनीश्रीपा० पू० त० ॥ ७ ॥ ईशान्ये ॐ ह्रीं भं द्विरंडेशवज्रिणीभ्यां नमः द्विरंडेशवज्रिणीश्रीपा० पू० त० ॥ ८ ॥ पूर्वाग्निमध्ये ॐ ह्रीं मं महाकालेशजयाभ्यां नमः महाकालेशजयाश्रीपा० पू० त० ॥ ९ ॥ दक्षिणनैर्ऋतमध्ये ॐ ह्रीं यं त्वगात्मभ्यां बालेशसुमुखेश्वरीभ्यां नमः बालेशसुमुखेश्वरीश्रीपादुकां पू० त० ॥ १० ॥ पश्चिमवायव्यमध्ये ॐ ह्रीं रं असृगात्मभ्यां भुजंगेशरेवतीभ्यां नमः भुजंगेशरेवतीश्रीपा० पू० त० ॥ ११ ॥ उत्तरेशानयोर्मध्ये ॐह्रीं लं मांसात्मभ्यां पिनाकीशमाधवीभ्यां नमः पिनाकीशमाधवीश्रीपा० पू० त० ॥ १२ ॥ आग्नेयदक्षिणमध्ये ॐ ह्रीं वं वेदात्मभ्यां खड्गीशवारुणीभ्यां नमः खड्गीशवारुणीश्रीपा० पू० त० ॥ १३ ॥ नैर्ऋतपश्चिममध्ये ॐ ह्रीं शं अस्थ्यात्मभ्यां बकेशवायवीभ्यां नमः बकेशवायवीश्रीपा० पू त० ॥ १४ ॥ वायुसोममध्ये ॐ ह्रीं षं मज्जात्मभ्यां श्वेतेशरक्षोवधारिणीभ्यां नमः श्वेतेशरक्षोवधारिणीश्रीपा० पू० त० ॥१५॥ ईशानपूर्वमध्ये ॐ ह्रीं सं शुक्रात्मभ्यां भृग्वीशसहजाभ्यां नमः भृग्वीशसहजाश्रीपा० पू० त० ॥ १६ ॥ ततो भूपुराद्बहिः दक्षि

णभागे लकुलेशादित्रयं पूजयेत् ॥ ॐ ह्रीं हं प्राणात्मभ्यां लकुलीशलक्ष्मीभ्यां नमः लकुलीशलक्ष्मीश्रीपा॰ पू॰ त॰ ॥ १ ॥ ॐ ह्रीं लं शक्त्यात्मभ्यां शिवेशव्यापिनीभ्यां नमः शिवेशव्यापिनी श्रीपा॰ पू॰ त॰ ॥ २ ॥ ॐ ह्रीं क्षं क्रोधात्मभ्यां संवर्त्तकेशमहामायाभ्यां नमः संवर्त्तकेशमहामायाश्रीपा॰ पू॰ त॰ ॥ ३ ॥ ईशानभागे ॐ ह्रीं योगिनीसहितेभ्यो दिव्ययोगीश्वरेभ्यो नमः योगिनीसहितदिव्ययोगीश्वरश्रीपा॰ पू॰ त॰ ॥ ४ ॥ आग्नेय कोणे ॐ ह्रीं योगिनीसहितेभ्यो अंतरिक्षस्थयोगीश्वरेभ्यो नमः योगिनीसहितांतरिक्षयोगीश्वरश्रीपा॰ पू॰ त॰ ॥ ५ ॥ नैर्ऋत्यकोणे ॐ ह्रीं योगिनीसहितभूमिस्थयोगीश्वरेभ्यो नमः योगिनीसहितभूमिस्थयोगीश्वरश्रीपा॰ पू॰ त॰ ॥६॥ पूर्वे गं गणपतये नमः गणपतिश्रीपा॰ पू॰ त॰ ॥ ७ ॥ दक्षिणे भैं भैरवाय नमः भैरवश्रीपा॰ पू॰ त॰ ॥ ८ ॥ पश्चिमे क्षं क्षेत्रपालाय नमः क्षेत्रपालश्रीपा॰ पू॰ त॰॥९॥ उत्तरे दुं दुर्गायै नमः दुर्गाश्रीपा॰ पू॰ त॰ ॥१०॥ पुष्पांजलिमादाय मूलमुच्चार्य—अभीष्टसिद्धिं मे देहि॰ नवमावरणार्चनम् ॥ विशेषार्घबिंदुं भैरवोपरि दद्यात् । पजितास्तर्पिताः संतु पूर्ववन्मुद्राः प्रदर्शयेदिति नवमावरणम् ॥९॥ अथ दशमावरणम्॥भूपुराद्बहिः पूर्वादिदशदिक्षु इंद्रादीन् पूजयेत् ॥ ॐ ह्रीं लं इंद्राय नमः इंद्रश्रीपा॰पू॰त॰॥ १ ॥ ॐ ह्रीं रं अग्नये नमः अग्निश्रीपादुकां पू॰ त॰ ॥२॥ ॐह्रीं मं यमाय नमः यमश्रीपा॰ पू॰ त॰ ॥३॥ ॐह्रीं क्षं निर्ऋतये नमः निर्ऋतिश्रीपा॰पू॰त॰ ॥४॥ ॐ ह्रीं वं वरुणाय नमः वरुण श्रीपादु॰पू॰ त॰ ॥ ५ ॥ ॐह्रीं यं वायवे नमःवायुश्रीपा॰ पू॰ त॰ ॥ ६ ॥ ॐह्रीं सं सोमाय नमः सोमश्रीपा॰पू॰त॰॥ ७ ॥ ॐ ह्रीं हं ईशानाय नमः ईशानश्रीपा॰पू॰त॰ ॥ ८ ॥ ॐ आं ब्रह्मणे नमः ब्रह्मश्रीपा॰ पू॰ त॰ ॥ ९ ॥ ॐह्रीं अं अनंता॰ अनंतश्रीपा॰ पू॰ त॰ ॥ १० ॥ पुष्पांजलिमादाय मूलमुच्चार्य, अभीष्टसिद्धिं मे॰ दशमावरणार्चनम् ॥ १ ॥ विशेषार्घ्यबिंदुं भैरवोपरि दद्यात् । पूजितास्तर्पिताः संतु पूर्ववन्मुद्रां प्रदर्शयेदिति दशमावरणम्॥१०॥अथैकादशावरणम् ॥ पूर्वादिक्रमेण इंद्रादिदिक्पालसमीपे स्वस्वायुधान् पूजयेत् ॥ ॐ वज्राय नमः ॐ शक्तये॰ ॐ दंडाय॰ ॐ खड्गाय॰ ॐपाशाय॰ ॐ अंकुशाय॰ ॐ गदायै॰ ॐ त्रिशूलाय॰ ॐ पद्माय नमः ॐ चक्राय नमः ॥ १० ॥ पुष्पांजलिमादाय मूलमुच्चार्य अभीष्टसिद्धिं मे॰ रुद्राख्यावरणार्चनम् ॥ १ ॥ विशेषार्घबिंदु भैरवोपरि दद्यात् । पूजितास्तर्पिताः संतु पूर्ववन्मुद्रां प्रदर्शयेदिति एकादशावरणम् ॥ ११ ॥ इति आवरणपूजा ॥ अथ गंधादिपूजनम् ॥ मूलम्—परमानंदसौरभ्य परिपूर्णदिगंबर ॥ गृहाण परमं गंधं कृपया भैरवेश्वर ॥ १ ॥ श्रीभैरवाय गंधं स॰ कनिष्ठिकांगुष्ठयोगेन गंधमुद्रां प्रदर्श्य ॥ मू॰—तुरीयवनसंभूतं नानापुष्पमनोहरम् ॥ अनंतसौरभं पुष्पं गृहाण परमेश्वर ॥ १ ॥ श्रीभैरवाय पुष्पं स॰ ॥ अधोमुखतर्जन्यंगुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् ॥ मू॰फडिति धूपपात्रं संप्रोक्ष्य नमः इति गंधपुष्पाभ्यां संपूज्य पुरतो निधाय रमिति बीजेन उपर्यग्निं संस्थाप्य तदुपरि दशांगं दत्वा धूपं स॰ ॥ तर्ज

न्यंगुष्ठयोगेन धूपमुद्रां प्रदर्श्य वामभागे घंटां निधाय अस्त्रेण प्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य गंधादिभिः संपूज्य ॐ जगद्ध्वनि मातः स्वाहेति घंटामंत्रेणाभिमंत्र्य गंधपुष्पाभ्यां संपूज्य वामेन तां वादयेत् ॥ मध्यमानामिकांगुष्ठै धूपं धृत्वा गायत्रीं मूलमंत्रं च पठन् देवस्य वामभागे धूपपात्रं स्थापयेत् ॥ ततो दीपपात्रं गोघृतेनापूर्य तत्र कर्पूरवर्तिं निक्षिप्य ह्रीमिति प्रज्वाल्य धेनुमुद्रयामृतीकृत्य मूलमंत्रवेदोक्तमंत्रेण दीपं सं० ॥ शंखजलमुत्सृज्य मध्यमांगुष्ठयोगेन दीपमुद्रां प्रदर्श्य पूर्ववद्घंटां वादयन्नेत्रादिपादपर्यंतं दीपं प्रदर्शयन् देवस्य दक्षिणभागे निधापयेत्॥ ततोनैवेद्यम्॥देवस्याग्रे जलेन चतुरस्रं मंडलं कृत्वा स्वर्णरौप्यादिनिर्मितं भोजनपात्रंसंस्थाप्य तन्मध्ये षड्रसोपेतं विविधप्रकारम् अन्नं संस्थाप्य ॐ ह्रीं नम इति मंत्रेणार्घ्यजलेन संप्रोक्ष्य मूलेन संवीक्ष्य अधोमुखद क्षिणहस्तोपरि तादृशं वामं निधाय यमिति वायुबीजं षोडशधा संजप्य वायुना तद्गतदोषान्संशोष्य दक्षिणक रतले अग्निबीजं विचिंत्य तत्पृष्ठलग्नं वामकरतलं कृत्वा नैवेद्यं प्रदर्श्य रमिति १६ वारं संजप्य तदुत्पन्नाग्निना तद्दो षं दग्ध्वा वामकरतले अमृतबीजं विचिंत्य तत्पृष्ठलग्नं दक्षिणकरतलं कृत्वा नैवेद्यं प्रदर्श्य वं १६ वारं जपित्वा तदुत्थामृतधारयाप्लावितं विभाव्य हुमित्यवगुंठ्य धेनुमुद्रां प्रदर्श्य मूलेनाष्टधाभिमंत्र्य गंधपुष्पाक्षतान्निक्षिप्य वामां गुष्ठेन नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा मूलांते–तत्पात्रे सद्धविः सौख्यं विविधानेकभक्षणम्। निवेदया मि देवेश सानुगाय जुषाण तत् ॥ सांगाय सपरिवाराय श्रीमद्बटुकभैरवाय नैवेद्यं समर्पयामि इति जलमुत्सृज्य ॥ ॐअमृतोपस्तरणमसि स्वाहेति देवस्य दक्षहस्ते जलं दत्त्वा देवेन तज्जलंप्राशितमितिभावयन्वामहस्तेन ग्रासमुद्रां प्रदर्शयन्दक्षिणहस्तेन प्राणादि पञ्चमुद्राः प्रदर्शयेत् यथा अंगुष्ठकनिष्ठानामाभिः ॐ प्राणाय स्वाहा ॥ १ ॥ अंगुष्ठ तर्जनीमध्यमाभिः ॐ अपानाय स्वाहा ॥२॥ अंगुष्ठमध्यमानामाभिः ॐव्यानाय स्वाहा ॥३॥ अंगुष्ठतर्जनीमध्यमा नामाभिः ॐ उदानाय स्वाहा ॥४॥ सर्वांगुलिभिः ॐ समानाय स्वाहा ॥५॥ एवं पंचमुद्राः प्रदर्श्य देवं भुक्तवंतं वि भाव्य,नमस्ते देवदेवेश सर्वतृप्तिकरं परम् । परमानंदपूर्णं त्वं गृहाण जलमुत्तमम् ॥१॥ सुवर्णादिपात्रस्थं कर्पूरादि सुवासितं जलं निवेद्य अस्त्रमंत्रेण जवनिकारूपेण भोजनस्थानं सवेष्टयेत्। ब्रह्मेशाद्यैः सरसमभितः सोपविष्टः समं तात्सिजद्वालव्यजननिकरैर्वीज्यमानः सखीभिः ॥ नर्मक्रीडाप्रहसनपरो हासयन्पंक्तिभोक्तॄन् भुंक्ते पात्रे कनकघ टिते षड्रसान्भैरवेशः ॥ १ ॥ इति देवं ध्यात्वा, मूलमंत्रं यथाशक्ति जपित्वावश्यपूजांगत्वेन नित्यहोमं कुर्यात् अथ नित्यहोमः॥ स्वदक्षिणभागे स्वदक्षिणहस्तप्रमाणं चतुरंगुलमुन्नतं चतुरस्रं स्थंडिलं कृत्वा मूलेन वीक्ष्य फडिति संप्रोक्ष्य तेनैव हुमिति दर्भैः संताड्य कवचेन मुष्टिनासिंच्य मूलेन होमद्रव्यं परिषिच्य मूलेनाग्निं समानीय क्रव्या दांशं नैर्ऋत्यामेकमंगारं परित्यज्य मूलेनाग्निं स्थंडिले संस्थाप्य तत्र भैरवं ध्यात्वा गंधाद्यैः संपूज्य आज्येन व्याहृ तिहोमं कृत्वा मूलेन पंचविंशतिसंख्यया आज्येन तिलेनान्नेन वा होमं कुर्यात् यथा–ॐ भूःस्वाहा॥ ॐभुवःस्वाहा ॥

ॐ स्वः स्वाहा॥ॐ भूर्भुवः स्वः स्वाहा ॥ ॐ ह्रां हृदयाय नमः स्वाहा ॥ ॐ ह्रीं शिरसेस्वाहा ॥ ॐ ह्रूं शिखायै वषट् स्वाहा ॥ ॐ ह्रैं कवचाय हुं स्वाहा॥ॐ ह्रौं नेत्रत्रयाय वौषट् स्वाहा॥ॐह्रः अस्त्राय फट् स्वाहा॥एवं हुत्वा गंधाद्यैःसंपूज्य देवतापीठे मूर्त्तौ संयोज्य वह्निं विसृजेत् ॥ भो भो वह्ने महाशक्ते सर्वकामप्रसादक ॥ कर्मांतरेपि संप्राप्ते सान्निध्यं कुरु सादरम् ॥ १ ॥ ततो योनिमुद्रया प्रणमेदिति नित्यहोमविधिः ॥ अथ बलिदानम् ॥ देवस्याग्नेय्यां चतुरस्रं वृत्तं त्रिकोणं मंडलं कृत्वा तत्र सिद्धान्नं सव्यंजनोदकसहितं पात्रं गृहीत्वा तत्र सर्वभूतानि ध्यात्वा गंधपुष्पाभ्यां संपूज्य, ॥ ॐ ये रौद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ॥ योगिभ्योप्युग्ररूपाश्च गणानामधिपाश्च ये ॥ १ ॥ भूचराः खेचराश्चैव तथाचैवांतरिक्षगाः ॥ सर्वे ते प्रीतमनसो भूत्वा गृह्णंत्विमं बलिम् ॥ २ ॥ इति वामकरांगुलिभिरर्घ्यं जलेनोत्सृज्य पुष्पांजलिमादाय ॥ ॐ भूतानि यानीह वसंति भूतले बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥ संतोषमासाद्य व्रजंतु सर्वे क्षमंतु तान्यत्र नमोस्तु तेभ्यः ॥ १ ॥ इति पुष्पांजलिं दत्त्वा प्रणम्य विसर्जनमुद्रया विसृज्य स्वात्मानं शुद्धजलेन संप्रोक्षयेदिति बलिदानम् ॥ ततस्तृप्तं देवं विभाव्य धेनुमुद्रयामृतीकृत्य स्वर्णादिपात्रस्थजलेनोत्तरापोशनं दद्यादनेन–ॐ अमृतापिधानमसि स्वाहेति दक्षहस्ते जलं दत्त्वा, ततो नैवेद्यपात्रं नैर्ऋत्यां स्थाप्य गतसारं नैवेद्यं किंचिदुद्धृत्य. ॐ चंडेश्वर्य्यै नमः इति देवस्योच्छिष्टभागमीशान्यां दिशि दद्यात् ॥ ततोऽस्त्रमंत्रेण तत्स्थानं प्रोक्ष्य प्रोक्षणादिभिः संशोध्य; हस्तमुखप्रक्षालनार्थं जलं करोद्वर्त्तनार्थं सुगंधि चूर्णं दत्त्वा, गंडूषां कारयित्वा कर्पूरैकदलैर्दंतधावनं करिकल्प्य पुनर्गंडूषार्थं जलं दत्त्वा देवस्य चरणक्षालनं कृत्वा मूलेन शुद्धाचमनं दद्यात् ॥ ततस्तांबूलम् ॥ पूगीफलं महद्दिव्यं नागवल्लिदलान्वितम् ॥ कर्पूरादिसमायुक्तं तांबूलं प्रतिगृह्यताम् ॥ १ ॥ मू० तांबूलं स० ॥ मू० दक्षिणां स० ॥ मू० छत्रचामरादीन् स० ॥ तत आरार्त्तिकं कुर्यात् ॥ शालिगोधूमपिष्टेन सगुडजीरकेण च त्रिकोणाकारं मंडूकरूपं वा नवदीपान्कृत्वा घृतेन पाचयित्वा स्वर्णादिपात्रे चंदनेनाष्टदलं त्रिकोणं मंडलं कृत्वा मूलेन संप्रोक्ष्य अष्टदले अष्टदीपान्, त्रिकोणे मध्ये एकं दीपमेवं नव दीपान् संस्थाप्य घृतेनापूर्य कर्पूरादिवर्तिं निक्षिप्य मायाबीजेन प्रज्वाल्य चक्रमुद्रां प्रदर्श्य धेनुमुद्रयामृतीकृत्य मूलेनारार्त्तिकं संपूज्य मूलेन देवोपरि नेत्रादिपादपर्यंतं नववारं त्रिवारं वा भ्रामयेद् घंटां नादयेत्॥तत्र मंत्राः ॥ अंतस्तेजो बहिस्तेज एकीकृत्य निरंतरम् ॥ त्रिधा देवोपरि भ्राम्य कुलदीपं निवेदयेत् ॥ १ ॥ चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च ॥ त्वमेव सर्वज्योतिस्त्वमार्त्तिक्यं प्रतिगृह्यताम् ॥ २ ॥ अग्निर्देवता० मू० नीराजनं स० ॥ यज्ञेन यज्ञ० मू० पुष्पांजलिं स० ॥ मंत्रपुष्पांजलिकरणानंतरं सुवासिन्यादिपूजनम् ॥ तथा च जपस्तोत्रपाठादि कृत्वा पश्चात्क्षमापनादिकांतं कार्यमित्येवमपि पक्षः ॥ अथ क्षमापनम् ॥ ज्ञानतोऽज्ञानतोऽवाथ यन्मया क्रियते शिव ॥ मम कृत्यमिदं सर्वमिति देव क्षमस्व मे ॥ १ ॥ अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ दासोहमिति मां मत्त्वा

क्षमस्व परमेश्वर ॥ २ ॥ अपराधो भवत्येव सेवकस्य पदेपदे ॥ कोऽपरः सहता लोके केवलं स्वामिनं विना ॥३॥ भूमौ स्खलितपादानां भूमिरेवावलंबनम् ॥ त्वयि जातापराधानां त्वमेव शरणः शिव ॥ ४ ॥ इति बद्धांजलि पूर्वकं क्षमाप्य, अर्घोदकेन चुलकमादाय, ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्तितुर्यावस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ॥ मांसं मदीयं च सकलं श्रीमद्बटुकभैरवदेवतायै समर्पयामि नमः ॥ ॐ तत्सदिति ब्रह्मार्पणं भवतु इति मंत्रेण आत्मानं समर्प्य, ततः कृतांजलिः प्रार्थयेत् ॥ यदुक्तं यदि भावेन पत्रं पुष्पं फलं जलम् ॥ निवेदितं च नैवेद्यं गृहाण अनुकंपया ॥ १ ॥ आवाहनं न जानामि न जानामि विसर्जनम् ॥ पूजाभागं न जानामि त्वं गतिः परमेश्वर ॥ २ ॥ कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ॥ अंतश्चरेण भूतानि इष्टस्त्वं परमेश्वर ॥ ३ ॥ प्रातर्योनिसहस्रेषु सहस्रेषु व्रजाम्यहम् ॥ तेषु चेष्टाचलाभक्तिरच्युतेऽस्तु सदा त्वयि ॥ ४ ॥ देवो दाता च भोक्ता च देवरूपमिदं जगत् ॥ देवं जपति सर्वत्र यो देवः सोहमेव हि ॥ ५ ॥ यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ॥ क्षंतु मर्हसि देवेश कस्य न स्खलितं मनः ॥ ६ ॥ क्षमस्व देवदेवेश गम्यते भुवनेश्वर ॥ तव पादांबुजे नित्यं निश्चला भक्तिरस्तु मे ॥ ७ ॥ इति प्राथ्य योनिमुद्रया प्रणमेत् ॥ ततः शंखमुद्धृत्य देवोपरि भ्रामयित्वा, साधु वासाधु वा कर्म यद्यदाचरितं मया ॥ तत्सर्वं कृपया देव गृहाणाराधनं मम ॥१॥ इत्युच्चरन् देवस्य दक्षिणहस्ते किंचिज्जलं दत्त्वा, प्राग्वदर्घ्यं देवशिरसि दत्त्वा शंखं यथास्थाने निवेश्य तज्जलं किंचिद्वा तद्धस्ते दत्त्वा, तस्मिन्पूजावशिष्टं किंचिद्गंधमाल्याग्रमूलमुच्चार्य तेन जलेनात्मानं प्रोक्ष्य अन्यानपि सामयिकान् तेनैव प्रोक्षयेत् ॥ इति सपीठयंत्रो परि वा मूर्तौ भैरवपूजा ॥ ततः स्ववामभागे सुवासिनीपूजां कुमारिकापूजां बटुकपूजां कुर्यात् ॥ स्वदक्षिणभागे चतुष्टयगुरुपादुकां पूर्ववत्पूजयेत् ॥ ततो जपमालामानीय क्वचित्पात्रे वामहस्तेन आच्छाद्य मूलेनार्घ्योदके नाभ्युक्ष्य, ॐ माले माले महामाये सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मात्त्वं सिद्धिदा भव ॥ १ ॥ इत्यनेन गंधपुष्पाभ्यां संपूज्य, ॐ गं अविघ्नं कुरु माले त्वं सर्वकार्येषु सर्वदा ॥ इति मंत्रेण दक्षिणहस्तेनादाय शिरसि गुरुं कंठे मंत्रं पीतवर्णं हृदि स्वेष्टदेवतां ध्यायन्हृदयसमीपे मालामा नीय दक्षिणहस्तमध्यमांगुलिमध्यपर्वणि संस्थाप्य, ज्येष्ठाग्रेण भ्रामयित्वा एकाग्रचितो यथाशक्ति मूलमंत्रं जपेत् ॥ जपांते ॥ ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम ॥ शुभं कुरुष्व मे भद्रे यशो वीर्यं च देहि मे ॥ १ ॥ ह्रीं सिद्ध्यै नमः ॥ इत्यनेन मंत्रेण मालां स्वशिरसि संस्थाप्य प्राणायामत्रयं ऋष्यादिकरषडं गं विधाय देवस्य वामहस्ते अर्घोदकेन गुह्येतिमंत्रेण जपं समर्प्य देवाय पुष्पांजलिं निक्षिप्य ततो ह्रीं सिद्ध्यै नमः इति पंचाक्षरेण पुनर्मालां संपूज्य यथास्थाने स्थापयेत् ॥ ततः कवचस्तोत्रसहस्रनामादिकं पठित्वा

यथाविधि पश्चात्पात्रवंदनं कुर्यात् ॥ ॥ अथ देवविसर्जनं स्वहृदयमध्ये स्थापनम् ॥ एवं स्तोत्रपाठकरणानंतरं परिवारगणाः देवस्य देहे विलीना इति विभाव्य परं देवरूपमात्मानं ध्यात्वा मूलविद्यांते श्रीमद्बटुकभैरव क्षमस्वेति तालत्रयेण देवं प्रतिबोध्य तेजोमयं विभाव्य, गच्छ गच्छ परस्थाने स्वस्थाने परमेश्वर ॥ यद्धि ब्रह्मादयो देवा न विदुः परमं पदम् ॥ इत्युच्चार्य तेजोरूपं तं संहारमुद्रया निर्माल्य पुष्पेण तत्तेजः समुद्धृत्य आघ्राय पूरकयोगेन शिरसि सहस्रदलकमलं प्रापयेत्तत्र तेजोरूपं ध्यात्वा, सुषुम्णावर्त्मना ॐ हृदयाय नमः ॥ इति हृदयकमलमानीय तत्र यथोक्तं रूपं ध्यात्वा॥ॐतिष्ठ तिष्ठ परस्थाने स्वस्थाने परमेश्वर॥ यत्र ब्रह्मादयो देवाः सर्वे तिष्ठंति मे हृदि॥ इति हृदयकमले स्थापयित्वा मानसोपचारैः संपूज्य पुनस्तेजोरूपं कुंडलिनीरूपेण मूलादि ब्रह्मरंध्रांतं ध्यात्वा मूलाधारे स्थापयेत् ॥ एतदीशान्यां जलेन त्रिकोणं वृत्तं चतुरस्रं मंडलं कृत्वा तत्र निर्माल्यवाहिनीं देवीं निर्माल्येन संपूज्य प्रणमेत् ॥ ततः-देवनाथ गुरो स्वामिन्देशिकस्यात्मनायकं ॥ त्राहिमांत्वंकृपासिंधो पूजां पूर्णतरां कुरु ॥ १ ॥ इति गुरुं संप्रार्थ्य, कराभ्यां विशेषार्घ्यमादाय आमस्तकमुद्धृत्य शिरसिस्थिताय श्री गुरवे समर्प्य. तत्पात्रं दक्षिणकरतले निधाय वामांगुष्ठानामिकाभ्यां शिरसि गुरुपादुकाभ्यां त्रिः संतर्प्य तत्पात्रं यथास्थाने निवेशयेत् ॥ तत्र विशेषार्घजलं किंचित्पात्रांतरेणादाय ॐ ह्रीं २१ आत्मतत्त्वं शोधयामिस्वाहा ॥ ॐ २१ विद्यातत्त्वं शोधयामि स्वाहा ॥ ॐ २१ शिवतत्त्वं शोधयामि स्वाहा ॥ ॐह्रीं २१ सर्वतत्त्वं शोधयामि स्वाहा इति चतुर्भिर्मंत्रैश्चुलकचतुष्टयं स्वीकारं शोधयामि स्वाहेति जलं स्वपात्रे कृत्वा तत्र विशेषार्घजलं किंचिद्दत्त्वा तत्पात्रं कराभ्यामादाय मूलमुच्चार्य गुरुपादुकास्मरणपूर्वकं प्रकाशामर्षहस्ताभ्यां ब्योन्मनीस्रुचा, धर्माधर्मकलास्नेहं पूर्णवह्निं जुहोम्यहम् ॥ इत्युच्चार्य तज्जलं प्राश्नीयात् ॥ ततः स्ववामकान्यथाशास्त्रं यथागुरूपदेशं संभाव्य तेषु परितुष्टेषु बलिविसर्जनं कुर्यात् ॥ यथा-पूर्वस्थापितबलिपात्रस्थमन्नमेकपात्रे कृत्वा पूजागृहाद्बहिः पूर्ववन्मंडलं कृत्वा तत्र दद्यात् ॥ तथा-गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम् ॥ कृष्णाभं भैरवं ध्यायेत्सर्वविघ्ननिवारणम् ॥ १ ॥ एवं ध्यात्वा दद्यात् ॥ उच्छिष्टभैरव एह्येहि बलिं गृह्ण २ हुं फट् स्वाहेति तदन्नं तत्र विसृज्य, तत्पात्रं प्रक्षाल्य विशेषार्घ्यबिंदुं भैरवोपरि दत्त्वा, तेनोदकेन स्वसामयिकानभिषिच्य शुद्धजलेनापूर्य ततः शांतिस्तोत्रं पठेत् ॥ यथा-नश्यंतु प्रेतकूष्मांडा नश्यंतु दूषका नराः ॥ साधकानां शिवाः संतु स्वाम्नायपरिपालनाः ॥१॥ जयंतु मातरः सर्वा जयंतु योगिनीगणाः ॥ जयंतु सिद्धडाकिन्यो जयंतु गुरुशक्तयः ॥ २ ॥ नन्दन्तु अणिमाद्यास्तु नश्यंतु भैरवादयः ॥ नंदंतु भैरवाः सर्वे सिद्धविद्याधरादयः ॥ ३ ॥ ये चाम्नायविशुद्धाश्च मंत्रिणःशुद्धबुद्धयः ॥ सर्वदा नंदयानंदं नंदंतु कुलपालकाः ॥ ४ ॥ इंद्राद्यास्तर्पिताः संतु तृप्यंतु वास्तुदेवताः । चंद्रसूर्यादयो देवास्तृप्यंतु गुरुभक्तितः ॥५॥ नक्षत्राणि ग्रहा योगाः करणाद्यास्तथा परे ॥ ते सर्वे सुखिनो यांतु मासश्च तिथयस्त

था ॥ ६ ॥ तृप्यंतु पितरः सर्वे ऋतवो वत्सरादयः ॥ खेचरा भूचराश्चैव तृप्यंतु मम भक्तितः ॥ ७ ॥ अंतरिक्षचरा
घोरा ये चान्ये देवयोनयः ॥ सर्वे तु सुखिनो यांतु सर्वा नद्यश्च पक्षिणः ॥ ८ ॥ पर्वतास्तत्र यस्यैव पर्वताः कंदरा
गुहाः ॥ ऋषयो ब्राह्मणाः सर्वे शांतिं कुर्वंतु मे सदा ॥ ९ ॥ तीर्थानि पशवो गावो ये चान्ये पुण्यभूमयः ॥ वृद्धाः
पतिव्रता नार्यः शिवं कुर्वंतु मे सदा ॥ १० । शिवं सर्वत्र मे चास्तु पुत्रदारधनादिषु ॥ राजानः सुखिनः संतु क्षेम
मार्गे तु मे सदा११ शुभा मे दिवसा यांतु शिवस्तिष्ठतु मे हृदि ॥ द्वेष्टारः साधकानां च सदैवाम्नायदूषकाः ॥१२॥
डाकिनीनां मुखे यांतु तृप्तास्तृप्तास्तु ते सुताः ॥ शत्रवो नाशमायांतु मम निंदाकराः सदा ॥ १३ ॥ ये
निंदकास्ते विपदं प्रयांतु ये साधकास्ते प्रभवंतु सिद्धाः॥ये सर्ववीराःकरुणावलोकाःपुनःपरेशो मम सन्निधत्ते॥१४॥
इति रुद्रयामलोक्तं शांतिस्तवं पठित्वा, ततो मूलविद्यया प्राणायामं कृत्वा ऋष्यादिकरषडंगन्यासांश्च कृत्वा, श्रीगुरुं
प्रणम्य मूलेन निर्माल्यं शिरसि धृत्वा नैवेद्यादिकं देवभक्तेषु विभज्य स्वयं भुक्त्वा स्वात्मानं देवरूपं भावयन्
यथासुखं विहरेत्। इति श्रीह०बृ०ध०उपा०स्त०श्रीमद्बटुकोपा० श्रीबटुकभैरवपद्धतिनिरूपणं नाम प्रकरणम् ॥१५॥

अथापराधक्षमापनस्तोत्रम् ॥ गुरोः सेवां त्यक्त्वा गुरुवचनशक्तोऽपि न भवे भवत्पूजाध्यानाज्जपहवनयोगादि
रहितः ॥ त्वदर्चानिर्माणे क्वचिदपि न यत्नं च कृतवाञ्जगज्जालग्रस्तो झटिति कुरु हार्दं मयि विभो
॥ १ ॥ प्रभो दुर्गासूनो तव शरणतां सोऽधिगतवान्कृपालो दुःखार्तः कमपि भवदन्यं प्रकथये ॥ सुहृत्सम्प
त्तेहं सरलविरलः साधकजनस्त्वदन्यः कस्त्राता भवदहनदाहं शमयति ॥ २ ॥ वदान्यो मान्यस्त्वं विविधजन
पालो भवसि वै दयालुर्दीनार्तान्भवजलधिपारं गमयसि ॥ अतस्त्वत्तो याचे नतिनियमतोऽकिञ्चनधनः
सदा भूयाद्भावः पदनलिनयोस्ते तिमिरहा ॥ ३ ॥ अजापूर्वो विप्रो मिलपदपरो योतिपतितो महामूर्खो दुष्टा
वृजिननिरतः पामरनृपः ॥ असत्पानासक्तो यवनयुवतीव्रातरमणः प्रभावात्त्वन्नाम्नः परमपदवीं सोऽप्यधिगतः
॥४॥ दयां दीर्घां दीने बटुक कुरु विश्वम्भर मयि न चान्यस्त्वत्त्राता परमशिव मां पालय विभो ॥ महांश्च
र्य्यं प्राप्तस्तव सरलदृष्ट्या विरहितः कृपापूर्णैर्नेत्रैः कमलदलनिभैर्मां खचयतात् ॥ ५ ॥ सहस्ये किं हंसो नहि
तपति दीनं जनचयं घनान्ते किं चन्द्रोऽसमकरनिपातो भुवि तले ॥ कृपादृष्टेस्तेऽहं भयहर विभो किं विरहि
तो जले वा हर्म्ये वा घनरसमु यातो न विषमः ॥ ६ ॥ त्रिमूर्तिस्त्वं गीतो हरिहरविधातात्मकगुणो निराकारः
शुद्धः परतरपरः सोऽप्यविषयः ॥ दयारूपं शान्तं मुनिगणनुतं भक्तदयितं कदा पश्यामि त्वां कुटिलकचशोभि
त्रिनयनम् ॥ ७ ॥ तपो योगं साङ्ख्यं यमनियमचेतः प्रयजनं न कौलार्च्चाचक्रं हरिहरविधीनां प्रियतमम् ॥
न जाने ते भक्तिं परममुनिमार्गं मधुविधिं तथाप्येषा वाणी परिरटति नित्यं तव यशः ॥ ८ ॥ न मे काङ्क्षा

१ स्थूलध्यानात् । २ ब्राह्मणभोजनयज्ञात् । ३ हे सदासहायकमित्र । ४ निष्कपटः । ५ एकाकी । ६ तव उपासकः । ७ वदान्यो
दानशूरः ८ महत्तराम । ९ उदारदृष्ट्या । १० कमलपत्रनिभैः । ११ पवित्रीकुरुतात् ( खच पवित्रीकरणे धातुः ) १२ पौषे ।

धर्मे न वसुनिचये राज्यनिवहे न मे स्त्रीणां भोगे सखिसुतकुटुम्बेषु न च मे ॥ यदा यद्यद्भाव्यं भवतु भगवन् पूर्वसुकृतान्ममैतत्तु प्रार्थ्यं तव विर्मलभक्तिः प्रभवतात् ॥ ९ ॥ कियाँस्तेऽस्मद्भारः पतितपतिताँस्तारयसि भो मदन्यः कः पापी यजनविमुखः पाठरहितः ॥ दृढो मे विश्वासस्तव नियतिरुद्धारविषया सदा स्याद्विश्रम्भः क्वचिदपि मृषा मा च भवतात् ॥ १० ॥ भवद्भावाद्भिन्नो व्यसननिरतः को मदपरो मदान्धः पापात्मा बटुक शिव ते नामरहितः ॥ उदारात्मन्बन्धो नहि तवक तुल्यः कलुषहा पुनस्सञ्चिन्त्यैवं कुरु हृदि यथा चेच्छसि तथा ॥ ११ ॥ जपान्ते स्नानान्ते ह्युषसि च निशीथे पठति यो महासौख्यं देवो वितरति तु तस्मै प्रमुदितः ॥ अहो रात्रं पार्श्वे परिवसति भक्तानुगमनो वयोन्ते संहृष्टः परिनयति भक्तान् स्वभुवनम् ॥ १२ ॥ ॥ इति श्रीसिद्धयोगीश्वरश्रीघनैयालालशिष्येणात्मारामेण विरचितं श्रीबटुकप्रार्थनापराधक्षमापनस्तोत्रं समाप्तम् प्र० ॥ १६ ॥

---

१ शरदि । २ इच्छ्यादीनां स्वभावगुणः प्रयत्नगुणो वा उत्पत्तिस्थितिविनाशकः । ३ मदिराविधानम् । ४ विमलभक्तिः सात्त्विकभक्तिः । ५ नियतिर्नियमे दैवे इति विश्वः । ५ परोपकारकारक हे मित्र ।

## ॥ अथ ग्रंथालंकारप्रारंभः ॥

श्रीमद्वाजसनेयगौतमकुलोत्पन्नोतिविद्यावतां मान्यो गुर्जरपंडितोपपदकौदीच्यः सहस्राह्वकः ॥ ज्योतिःशास्त्रविशारदोतिमतिमाञ्छ्रीत्र्यंकटाख्यो द्विजस्तज्जो वै हरिकृष्णसंज्ञक इमं चक्रे विदां प्रीतये ॥ १ ॥ दक्षिणे सुमहाराष्ट्रदेशे देवगिरेः पुरः ॥ औरंगाबादनगरं चास्ति तत्र जनिर्मम ॥ २ ॥ प्रार्थये सर्वविदुषां क्षमध्वं मेऽपराधकम् ॥ यद्यत्र कुकृतं वा स्यादधिकं यत्रकुत्रचित् ॥ ३ ॥ रोषमुत्सृज्य तत्सर्वं निर्मलं कुरुतादरात् ॥ अत्रावशिष्टो यो भागः स तु शेषे भविष्यति ॥ ४ ॥ श्रीबटुकभास्करग्रंथान्तर्गतविशेषपदार्थाः स्तोत्रभाष्यादिकं च उपासनाशेषग्रंथे परिशिष्टे वक्ष्यामि ॥ इति श्रीमज्ज्योतिर्वित्कुलावतंसत्र्यंकटरामात्मजहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवेऽष्टमे धर्मस्कंधे तृतीये उपासनास्तबके श्रीबटुकभैरवोपासनानिरूपणं नाम चतुर्विंशत्यधिकशततमोऽध्यायः समाप्तः ॥ १२४ ॥ अथाग्रे स्वर्णाकर्षणभैरवोपासनाध्यायो भविष्यति ॥ ॥ ॥ ।

# अथ कालभैरवाष्टकस्तोत्रप्रारम्भः ।

श्रीगणेशाय नमः ॥ देवराजसेव्यमानपावनांघ्रिपंकजं व्यालयज्ञसूत्रमिंदुशेखरं कृपाकरम् ॥ नारदादियोगिवृंदवंदितं दिगंबरं काशिकापुराधिनाथकालभैरवं भजे ॥ १ ॥ भानुकोटिभास्करं भवाब्धितारकं परं नीलकंठमीप्सितार्थदायकं त्रिलोचनम् ॥ कालकालमंबुजाक्षमक्षशूलमक्षरं काशिकापुराधिनाथकालभैरवं भजे ॥ २ ॥ शूलटंकपाशदंडपाणिमादिकारणं श्यामकायमादिदेवमक्षयं निरामयम् । भीमविक्रमप्रभुं विचित्रतांडवप्रियं काशिकापुराधिनाथकालभैरवं भजे ॥ ३ ॥ भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं नितान्तभक्तवत्सलं समस्तलोकविग्रहम् ॥ निक्वणन्मनोज्ञहेमकिंकिणीलसत्कटिं काशिकापुराधिनाथकालभैरवं भजे ॥ ४ ॥ धर्मसेतुपालकं कुधर्ममार्गनाशनं कर्मपाशमोचकं सुधर्मदायकं विभुम् ॥ स्वर्णवर्णकेशपाशशोभितुण्डमंडलं काशिकापुराधिनाथकालभैरवं भजे ॥ ५ ॥ रत्नपादुकाप्रभाभिरामपादयुग्मकं नित्यमद्वितीयमिष्टदैवतं निरंजनम् ॥ मृत्युदर्पनाशकं करालदंष्ट्रभीषणं काशिकापुराधिनाथकालभैरवं भजे ॥ ६ ॥ अट्टहासभानुपद्मजांडकोशसन्ततिं दृष्टिपातनष्टपापजालमुग्रशासनम् ॥ अष्टसिद्धिदायकं कपालमालिकाधरं काशिकापुराधिनाथकालभैरवं भजे ॥ ७॥ भूतसंघनायकं विशालकीर्त्तिदायकं काशिवासलोकपुण्यपापशोधकं विभुम् ॥ नीतिमार्गकोविदं पुरातनं जगत्पतिं काशिकापुराधिनाथकालभैरवं भजे ॥८॥ कालभैरवाष्टकं पठंति ये मनोहरं ज्ञानमुक्तिसाधनं सुपुष्टिपुण्यवर्द्धनम् ॥ शोकमोहदैन्यलोभकोपतापनाशनं काशिकापुराधिनाथकालभैरवं भजे ॥ ९ ॥ इति शंकराचार्यविरचितं कालभैरवाष्टकस्तोत्रं संपूर्णम् ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मज-क्षेमराजश्रेष्ठिना स्वकीये
"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयंत्रालये मुद्रयित्वा प्रकाशितम् ।





पुस्तकें मिलने के स्थान :–

१. खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम् प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
सातवीं खेतवाड़ी खम्बाटा लेन
बम्बई–४०० ००४

२. गंगाविष्णु श्रीकृष्णदास,
लक्ष्मीवेंकटेश्वर स्टीम् प्रेस,
व बुक डिपो,
अहिल्या बाई चौक, कल्याण,
(जि० ठाणे–महाराष्ट्र)

३. खेमराज श्रीकृष्णदास, चौक–वाराणसी (उ. प्र.)